सिद्धान्तः—

स्पष्टो ह्येकेषाम् ॥ १३ ॥

एकेषां काण्वानां शाखायाम् 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते' इति श्रुतौ स्वातन्त्र्येण पारतन्त्र्येण च सर्वथापि ज्ञानिनां लिङ्गशरीरनिर्गमनाभावः स्पष्टः । तथा च 'न तस्मात् प्राणा उत्क्रामन्ति' इति माध्यंदिनशाखायामपि तस्मादिति पञ्चम्यन्तपदस्य लक्षणया षष्ठ्यर्थप्रतिपादकत्वमेव वक्तव्यम् । अन्यथा अज्ञानिनामपि जीवं विना स्वातन्त्र्येण लिङ्गशरीरनिर्गमनाभावेन अप्रसक्तप्रतिषेधादिति भावः ॥ १३ ॥

स्मर्यते च ॥ १४ ॥

भगवद्गीतादिस्मृतिष्वपि ज्ञानिनां लिङ्गशरीरनिर्गमनाभावः प्रतिपाद्यत इत्यर्थः ॥ १४ ॥

लयाधिकरणम् ॥ ७ ॥

तर्हि ज्ञानिनां लिङ्गशरीरं कुत्र गच्छतीत्याकाङ्क्षायामाह—

तानि परे तथाह्याह ॥ १५ ॥

तानि ज्ञानिनां भूतेन्द्रियप्राणान्तःकरणानि परे परमात्मनि लीयन्ते । कुतः ? तथाह्याह—'इमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । भिद्यते हृदयग्रन्थिः । तथा विद्वान्नामरूपाद्विमुक्तः । यदा सर्वे प्रमुच्यन्ते' इत्यादिश्रुतयः ब्रह्मज्ञानिसंबन्धिनां दशेन्द्रियाणां पञ्चप्राणानां मनसश्च परमात्मनि लयं प्रतिपादयन्तीत्यर्थः । यद्यपि 'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य' इति सूत्रे ज्ञानिनां लिङ्गशरीरस्य ब्रह्मणि लय उक्तः, तथापि 'तानि परे तथाह्याह' इति सूत्रे वक्ष्यमाण एवार्थः सुखबोधार्थमाकृष्य पूर्वमुक्त इति न पौनरुक्त्यमिति भावः ॥ १५ ॥

अविभागाधिकरणम् ॥ ८ ॥

स च लिङ्गशरीरनाशः सुषुप्त्युत्क्रान्तिप्रलयादिकालेष्विव स्थूलावस्थानाशमात्रं न भवति, किं तु आत्यन्तिकनाश इत्याह—

अविभागो वचनात् ॥ १६ ॥

अविभागः ज्ञानिनां लिङ्गशरीरस्य आत्यन्तिकनाशः अङ्गीकर्तव्यः । कुतः? वचनात् 'अविद्यायाः परं पारं तारयसि' इति श्रुतौ ब्रह्मसाक्षात्कारेण अविद्यानिवृत्तिश्रवणात् अविद्याजन्यस्य लिङ्गशरीरस्य आत्यन्तिकनाश एवाङ्गीकर्तव्य इत्यर्थः ॥ १६ ॥

तदोकोऽग्राधिकरणम् ॥ ९ ॥

इयता सूत्रसंदर्भेण ज्ञानिनां लिङ्गशरीरनिर्गमनाभावमुक्त्वा सगुणोपासकानां लिङ्गशरीरनिर्गमनप्रकारं दर्शयति—

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥**

तदोकोऽग्रज्वलनं तस्य जीवस्य प्राणेन्द्रियादिपरिवृतस्य ओकः स्थानं हृत्पुण्डरीकं तस्य अग्रज्वलनं भवति अग्रस्य ऊर्ध्वभागस्य विकासो भवति तत्प्रकाशितद्वारा तेन विकासेन प्रदर्शितदेवयानमार्गः सन्नुपासकः सुषुम्नानाडीद्वारा देहात् वहिर्निर्गच्छतीति उत्तरेण संवन्धः । हृत्पुण्डरीकस्य ऊर्ध्वप्रदेशविकासे हेतुद्वयमाह—विद्यासामर्थ्यात् सगुणब्रह्मोपासनासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगात् तस्याः सगुणब्रह्मोपासनायाः शेषभूतयाङ्गभूतया गत्यनुस्मृत्या देवयानमार्गचिन्तया योगात् संवन्धाच्च तदोकोऽग्रज्वलनं भवतीति पूर्वेणान्वयः । तत्प्रकाशितद्वारः सन् उपासकः हार्दानुगृहीतः हृत्पुण्डरीकस्थेन सगुणब्रह्मणा अनुगृहीतः प्रेरितस्सन् शताधिकया शतसङ्ख्याकाभ्यः प्रधाननाडीभ्यः अधिकया अतिरिक्तया एकशततम्या सुषुम्नानाड्या देहात् वहिर्निर्गच्छतीत्यर्थः । 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति श्रुतिवलादिति भावः । अस्याः श्रुतेरयमर्थः— हृत्पुण्डरीकसंवन्धिन्यो नाड्य एकोत्तरशतं भवन्ति । तासां मध्ये एका सुषुम्नाख्या नाडी मूर्धानमभिनिस्सृता ब्रह्मरन्ध्रपर्यन्तं व्याप्ता । तद्द्वारा ऊर्ध्वमायन् देहात् वहिर्निगच्छन् उपासकः अमृतत्वं ब्रह्मलोकाख्यं गौणममृतत्वं प्राप्नोति, विष्वक् हृत्पुण्डरीकस्य चतसृषु दिक्षु विद्यमाना अन्या नाड्यः कर्मिणामुत्क्रमणे द्वाराणि भवन्तीत्यर्थः । सुकृतिनां दुष्कृतिनां च धूमादिमार्गेण तृतीयमार्गेण च स्वर्गनरकादिप्राप्तिः रंहतिपाद एवोक्तेति नात्रोच्यत इति भावः ॥ १७ ॥

रश्म्यधिकरणम् ॥ १० ॥

**रश्म्यनुसारी ॥ १८ ॥**

सुषुम्नानाड्या देहात् वहिर्निर्गतः उपासकः रश्म्यनुसारी नाडीसंसृष्टसूर्यकिरणावलम्बी सन् किरणद्वारेण ब्रह्मलोकं गच्छतीत्यर्थः ॥१८॥

निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥

दिवा मृतस्य उपासकस्य रश्मिद्वारा सूर्यलोकप्राप्तिरस्तु । रात्रौ मृतस्य उपासकस्य नाडीसंसृष्टरश्म्यभावात् रश्मिद्वारेण ब्रह्मलोकसंबन्धो न संभवतीति चेन्न । संबन्धस्य रश्मिनाडीसंबन्धस्य यावद्देहभावित्वात् दिवा च रात्रौ च रश्मिनाडीसंबन्धस्य विद्यमानत्वात् । दर्शयति च— 'आसु नाडीषु रश्मयः सन्तता' इति श्रुतिः सर्वकालेष्वपि रश्मिनाडी-संबन्धं प्रतिपादयतीत्यर्थः । सूर्यमण्डलस्य मेरुव्यवधानेन प्रत्यक्षयोग्य-स्थूलकिरणाभावेऽपि अतीन्द्रियाः सूक्ष्मकिरणाः रात्रावपि सन्त्येव । अन्यथा ग्रीष्मकाले रात्रिषु तापस्वेदादिकं न स्यादिति भावः ॥ १९ ॥

अयनाधिकरणम् ॥ ११ ॥

अतश्चायनेऽपि हि दक्षिणे ॥ २० ॥

यतः कारणाद्रात्रौ मृतस्य उपासकस्य ब्रह्मलोकसंबन्ध उक्तः, अत एव दक्षिणे अयने । इदमुपलक्षणं कृष्णपक्षे च मृतस्य उपासकस्य सूर्य-किरणद्वारा अर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिरस्तीत्यर्थः ॥ २० ॥

ननु 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः । धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इति भगवद्गीतास्मृतिः उत्त-रायणदक्षिणायनयोः मृतानामेव उपासकानां कर्मिणां च ब्रह्मलोकस्वर्ग-लोकादिप्राप्तिं दर्शयति । तथा च कथं दक्षिणायनकृष्णपक्षरात्र्यादिकालेषु मृतानामुपासकानां ब्रह्मलोकप्राप्तिरुच्यत इत्याशङ्क्याह—

योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥

स्मार्ते स्मृत्युक्ते एते उत्तरायणदक्षिणायने इत्येतदुभयं योगिनः प्रति प्राणायामादियोगाभ्यासतत्परान् प्रति उच्यत इति स्मर्यते प्रतिपाद्यते, न तु सगुणब्रह्मोपासकान् कर्मठांश्च प्रति । तथा च योगाभ्यासपराणां दक्षिणायने मृतिश्चेत् स्वर्गलोकप्राप्तिः, उत्तरायणे मृतिश्चेत् ब्रह्मलोक-प्राप्तिः, नान्यथा । उपासकानां कर्मिणां च यदाकदाचिन्मृतानामपि ब्रह्मलोकप्राप्तिः स्वर्गलोकप्राप्तिश्च संभवतीति भावः । वस्तुतस्तु भगवद्गी-तास्मृतौ विद्यमानानां अहश्शब्दरात्रिशब्दशुक्लकृष्णदक्षिणायनोत्तरायण-शब्दानां श्रुतिस्थाहरादिशब्दानामिव लोकपरत्वेन कालपरत्वाभावात् अस्याः स्मृतेः उपासककर्मिपरत्वेऽपि न कोऽपि विरोध इति भावः॥२१॥

इति ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य द्वितीयः पादः ॥

# चतुर्थाध्यायस्य तृतीयः पादः ।

अर्चिराद्यधिकरणम् ॥ १ ॥

उपासकानामुत्क्रान्तिप्रकारं कालानियमं च प्रतिपाद्य इदानीमर्चिरादिमार्गस्वरूपं निरूपयति—

**अर्चिरादिना तत्प्रथितेः ॥ १ ॥**

उपासकः अर्चिरादिना मार्गेण ब्रह्मलोकं गच्छति । कुतः ? तत्प्रथितेः तस्य अर्चिरादिमार्गस्य 'तेऽर्चिषमभिसंभवन्ति' इति छान्दोग्यश्रुतौ प्रसिद्धत्वादित्यर्थः ॥ १ ॥

वाय्वधिकरणम् ॥ २ ॥

बृहदारण्यकश्रुतौ 'स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकम्' इति वायुलोकवरुणलोकादयश्चत्वार उक्ताः । तेषां कुत्र प्रवेश इत्याकाङ्क्षायामाह—

**वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥**

अब्दात् संवत्सरलोकादुपरि वायुलोकं प्रवेशयेत् । कुतः ? अविशेषविशेषाभ्याम् 'स वायुलोकम्' इत्यविशेषवचनात् सामान्यवचनात् वायुलोकस्य कुत्रचित् प्रवेशः कर्तव्यः । तत्र वाय्वादित्ययोः परस्परं संबन्धरूपविशेषात् संवत्सरादित्ययोर्मध्ये वायोर्निवेश इति निश्चीयत इत्यर्थः । 'स वायुलोकम्' इति श्रुतेर्लोकमात्रप्रतिपादकत्वेन क्रमप्रतिपादकत्वाभावात् अविशेषवचनत्वमिति द्रष्टव्यम् ॥ २ ॥

तडिदधिकरणम् ॥ ३ ॥

**तडितोऽधिवरुणः संबन्धात् ॥ ३ ॥**

तडितः विद्युल्लोकात् उपरि वरुणलोकः प्रवेशनीयः । कुतः ? संबन्धात् विद्युद्वरुणयोः परस्परं संबन्धादित्यर्थः । इन्द्रप्रजापतिलोकयोस्तु 'अवशिष्टानामन्ते निवेशः' इति न्यायेन वरुणलोकानन्तरमिन्द्रलोकः तदनन्तरं प्रजापतिलोक इति भावः ॥ ३ ॥

आतिवाहिकाधिकरणम् ॥ ४ ॥

**आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥**

एतेषु अर्चिरादिलोकेषु पूर्वपूर्वलोकस्थाः देवाः उत्तरोत्तरलोकप्राप्तिपर्य-

न्तमुपासकानामातिवाहिकाः सहायभूताः नेतारः अङ्गीकर्तव्याः। कुतः? तल्लिङ्गात् 'स एनान् ब्रह्म गमयति' इति श्रुतौ विद्युल्लोकप्राप्त्यनन्तरम् अमानवपुरुषस्य नेतृत्वप्रतिपादनरूपाल्लिङ्गात् तद्दृष्टान्तेन पूर्वलोकेष्वपि नेतारोऽङ्गीकर्तव्या इत्यर्थः॥ ४॥

उभयव्यामोहात्तत्सिद्धेः॥ ५॥

उपासकसंबन्धिनाम् उभयेषां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च व्यामोहात् ब्रह्मलोकप्राप्तिपर्यन्तं स्थूलशरीराभावेन ज्ञानेन्द्रियाणां मार्गपरिज्ञानसामर्थ्याभावात् कर्मेन्द्रियाणां चलनसामर्थ्याभावाच्च तत्सिद्धेः तैरातिवाहिकैर्देवैरेव सिद्धेः गमनस्यावश्यं वक्तव्यत्वादित्यर्थः॥ ५॥

वैद्युतेनैव ततस्तच्छ्रुतेः॥ ६॥

ततः विद्युल्लोकप्राप्त्यनन्तरं वैद्युतेनैव ब्रह्मलोकाद्विद्युल्लोकं प्रत्यागतेन अमानवपुरुषेणैव नीयमानाः उपासकाः ब्रह्मलोकं गच्छन्ति। कुतः? तच्छ्रुतेः 'ततस्तत्पुरुषोऽमानव एत्य' इति श्रुतौ विद्युल्लोकप्राप्त्यनन्तरम् अमानवपुरुषस्य नेतृत्वश्रवणात् उपासकानां वरुणेन्द्रप्रजापतिलोकेषु नेत्रन्तरापेक्षाया अभावादित्यर्थः॥ ६॥

कार्याधिकरणम्॥ ९॥

इयता सूत्रसंदर्भेण अर्चिरादिमार्गस्वरूपं विचार्य इदानीं 'स एनान् ब्रह्म गमयति' इति वाक्यस्थब्रह्मशब्दार्थं विचारयति। प्रथमं सिद्धान्तमाह चतुर्भिः सूत्रैः—

कार्यं बादरिरस्य गत्युपपत्तेः॥ ७॥

कार्यम् 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुतौ परब्रह्मजन्यत्वेन प्रतिपाद्यमानं हिरण्यगर्भाख्यं ब्रह्मलोकस्थलीलाशरीरविशिष्टं कार्यं ब्रह्म सगुणब्रह्मोपासकानां प्राप्यमिति बादरिर्मन्यते। कुतः? अस्य उपासकस्य गत्युपपत्तेः परिच्छिन्नहिरण्यगर्भप्राप्त्यर्थमर्चिरादिमार्गेण गमनस्य उपपन्नत्वात्। परब्रह्मणस्तु आकाशवत् सर्वत्र परिपूर्णत्वेन परब्रह्मप्राप्त्यर्थमर्चिरादिमार्गेण गमनस्य व्यर्थत्वादित्यर्थः॥ ७॥

विशेषितत्वाच्च॥ ८॥

'स एनान् ब्रह्मलोकान् गमयति यस्मिन् सरण्यौ द्वौ समुद्रौ यस्मिन्नैरंमदीयं सरः यस्मिन्नश्वत्थः सोमसवनः यस्मिन्नपराजिता पूः ब्रह्मणः

प्रभुविमितं हिरण्मयं वेश्म तं ते प्राप्नुवन्ति' इत्यादिश्रुत्यन्तरेषु उपासकानां ब्रह्मलोकप्राप्तेः विशिष्योक्तत्वात् 'स एनान् ब्रह्म गमयति' इति श्रुतावपि ब्रह्मशब्देन ब्रह्मलोकस्थं हिरण्यगर्भाख्यं कार्यं ब्रह्मैव उपासकानां प्राप्यमित्यर्थः। हिरण्यगर्भप्राप्तिर्नाम हिरण्यगर्भभोगसदृशसकलभोगानुभवविशिष्टतया हिरण्यगर्भसंनिधौ अवस्थानम् ॥ ८ ॥

परब्रह्मणि मुख्यस्य ब्रह्मशब्दस्य हिरण्यगर्भे कथं प्रयोग इत्याशङ्कयाह—

सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

सामीप्यात् हिरण्यगर्भस्य प्रथमं परब्रह्मजन्यत्वेन असाधारणसंबन्धात् तद्व्यपदेशः लक्षणया ब्रह्मशब्दप्रयोगः ॥ ९ ॥

ब्रह्मलोकं प्राप्तानामुपासकानां कदा मुक्तिरित्याकाङ्क्षायामाह—

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

कार्यात्यये महाप्रलयसमये कार्यस्य ब्रह्मलोकस्य अत्यये नाशे सति तदध्यक्षेण ब्रह्मलोकाध्यक्षेण हिरण्यगर्भेण सह अतः परं हिरण्यगर्भादपि उत्कृष्टं परब्रह्म उपासकाः प्राप्नुवन्ति। कुतः ? अभिधानात् 'ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति' इति श्रुतेः ॥ १० ॥

स्मृतेश्च ॥ ११ ॥

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति स्मृतेश्चेत्यर्थः ॥ ११ ॥

चतुर्भिः सूत्रैः प्रथमं सिद्धान्तमुक्त्वा पश्चात् सूत्रत्रयेण पूर्वपक्षमाह—

परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

'स एनान् ब्रह्म गयमति' इत्यत्र ब्रह्मशब्देन परब्रह्मैवोच्यते इति जैमिनिर्मन्यते। कुतः ? मुख्यत्वात् ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात् मुख्ये संभवति गौणस्यान्याय्यत्वादित्यर्थः ॥ १२ ॥

दर्शनाच्च ॥ १३ ॥

'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिषु ब्रह्मशब्दस्य परब्रह्मणि प्रयोगदर्शनाच्चेत्यर्थः ॥ १३ ॥

पूर्वपक्षी स्वपक्षं प्रसाध्य सिद्धान्तं दूषयति—

न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥

'स एनान् ब्रह्मलोकान् गमयति' इति श्रुत्यन्तरबलादपि कार्ये हिर-

ण्यगर्भे प्रतिपत्त्यभिसंधिः प्राप्त्याशा न कर्तव्या । ब्रह्मलोकादिशब्दानां सर्वेषामपि लक्षणया परब्रह्मप्रतिपादकत्वसंभवादिति भावः ॥

अनेकेषाम् ऐरंमदीयाश्वत्थहिरण्मयवेश्मब्रह्मलोकादिशब्दानां परब्रह्मणि लक्षणाकल्पनापेक्षया एकस्यैव ब्रह्मशब्दस्य हिरण्यगर्भलक्षकत्वाङ्गीकारे लाघवात् व्यापकस्य ब्रह्मणः अत्रैव प्राप्तुं शक्यत्वेन तत्प्राप्त्यर्थमुपासकानामर्चिरादिमार्गेण गमनवैयर्थ्यात् बादरिमतमेव समीचीनं, न तु जैमिनिमतमिति भावः ॥ १४ ॥

अप्रतीकालम्बनाधिकरणम् ॥ ६ ॥

अहंग्रहोपासकानां प्रतीकोपासकानां च सर्वेषामपि ब्रह्मलोकप्राप्तिरिति केचिद्वदन्ति । तन्मतं निराकरोति—

अप्रतीकालम्बनान्नयतीति बादरायण
उभयथा दोषात्तत्क्रतुश्च ॥ १५ ॥

अप्रतीकालम्बनान् प्रतीकोपासकभिन्नान् अहंग्रहोपासकानेव अमानवपुरुषः ब्रह्मलोकं नयतीति बादरायणो मन्यते । कुतः ? उभयथा अहंग्रहोपासकान् प्रतीकोपासकांश्च उभयविधानपि ब्रह्मलोकं प्रापयतीत्यङ्गीकारे दोषात् बहुप्रयाससाध्याहङ्ग्रहोपासनानुष्ठानवैयर्थ्यरूपात् दोषादित्यर्थः । किं च तत्क्रतुश्च 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति तत्क्रतुश्रुतिरपि अहंग्रहोपासकस्यैव ब्रह्मलोकप्राप्तिं दर्शयति । इदमुपलक्षणम् 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्' इति स्मृतिरपि द्रष्टव्या । अयं भावः—मनोमयत्वभारूपत्वसत्यसंकल्पत्वाद्यनेकगुणविशिष्टं ब्रह्मैवाहमस्मीत्येवंविधानि जीवब्रह्माभेदध्यानरूपाणि दहरशाण्डिल्योपकोसलवैश्वानरविद्यादीनि अहंग्रहोपासनानि सत्यसंकल्पत्वादिबहुगुणज्ञानसाध्यत्वात् बहुप्रयाससाध्यानि। 'नाम ब्रह्मेत्युपासीत। मनो ब्रह्मेत्युपासीत । आदित्यं ब्रह्मेत्युपासीत' इत्येवंविधानि जडेषु नामादिषु ब्रह्मदृष्टिरूपाणि प्रतीकोपासनानि तु बहुगुणज्ञानाधीनत्वाभावात् स्वल्पायाससाध्यानि । तस्मात् अहंग्रहोपासकानामेव ब्रह्मलोकप्राप्तिः, प्रतीकोपासकानां तु ब्रह्मलोकादधस्तनमहर्लोकादिप्राप्तिरेवेति भावः । किंच 'यथाक्रतुरस्मिन् लोके पुरुषो भवति' इति तत्क्रतुश्रुतिरपि भ्रमरकीटन्यायेन सत्यसंकल्पत्वादिविशिष्टं सगुणब्रह्मैवाहमस्मीति ब्रह्माभेदध्यानवताम् अहंग्रहोपासकानामेव सगुणब्रह्मप्राप्तिं दर्शयति, न तु जडेषु नामादिषु ब्रह्मदृष्टिमतां प्रतीकोपासकानामिति भावः ॥ १५ ॥

## विशेषं च दर्शयति ॥ १६ ॥

'ये चारण्ये श्रद्धां सत्यमित्युपासते ते ब्रह्मलोकमभिसंपद्यन्ते' इति श्रुतिरपि सत्यब्रह्मोपासकानामेव ब्रह्मलोकप्राप्तिं दर्शयति, न तु मिथ्याभूतनामादिषु ब्रह्मदृष्टिं कुर्वतां प्रतीकोपासकानामित्यर्थः ॥ १६ ॥

इति ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य तृतीयः पादः ।

---

# ॥ चतुर्थाध्यायस्य चतुर्थः पादः ॥

संपद्याविर्भावाधिकरणम् ॥ १ ॥

सगुणब्रह्मोपासकानामर्चिरादिमार्गेण हिरण्यगर्भप्राप्तिमुक्त्वा इदानीं निर्गुणब्रह्मज्ञानिनामत्रैव परब्रह्मप्राप्तिमाह—

## संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

हृत्पुण्डरीके भूतेन्द्रियान्तःकरणादिमिलितः जीवः लिङ्गशरीरनाशानन्तरं हृत्पुण्डरीके सर्वत्र च परिपूर्णं ब्रह्म संपद्य प्राप्य स्वेन रूपेण नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्दादिस्वरूपेण आविर्भावः आविर्भूतो भावस्वरूपं यस्य स अभिव्यक्तस्वरूपवान् भवति । कुतः ? शब्दात् 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतेरित्यर्थः ॥ १ ॥

'अस्माच्छरीरात् समुत्थाय' इति वाक्ये ज्ञानिनामपि शरीरात् बहिर्निर्गमनस्य प्रतीयमानत्वात् कथं लिङ्गशरीरनाशपूर्वकं हृत्पुण्डरीकावच्छिन्नब्रह्मप्राप्तिरित्याशङ्क्याह—

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

अस्माच्छरीरात् समुत्थायेत्यत्र शरीरे विद्यमानेऽपि शरीराभिमानविनिर्मुक्तः शुद्धजीवः उच्यते । कुतः ? प्रतिज्ञानात् 'स्वेन रूपेणाभिनिष्पद्यते' इति उत्तरवाक्ये स्वरूपाभिव्यक्तिकथनादित्यर्थः ॥ २ ॥

ननु, 'परं ज्योतिरुपसंपद्य' इति वाक्ये ज्योतिश्शब्देन आदित्यमण्डलमुच्यते तथा च ज्ञानिनामपि उपासकानामिव सूर्यलोकद्वारा ब्रह्मलोकप्राप्तिरेव, नत्वत्रैव लिङ्गशरीरनाशपूर्वकं व्यापकब्रह्मप्राप्तिरित्याशङ्क्याह—

## आत्मा प्रकरणात् ॥ ३ ॥

ज्योतिश्शब्देन परमात्मैवोच्यते, न त्वादित्यमण्डलम्। कुतः? प्रकरणात् 'य आत्मा अपहतपाप्मा तमावां विविदिषावहे' इति पूर्ववाक्ये इन्द्रविरोचनाभ्यां हिरण्यगर्भं प्रति परमात्मनः पृष्टत्वादित्यर्थः ॥ ३ ॥

अविभागाधिकरणम् ॥ २ ॥

'ज्योतिरुपसंपद्य' इति वाक्ये ज्ञानिनां ब्रह्मसंबन्ध एव प्रतिपाद्यते, न ब्रह्मैक्यमित्याशङ्क्याह—

## अविभागेन दृष्टत्वात् ॥ ४ ॥

अविभागेन ब्रह्माभिन्नतयैव ज्ञानिनामवस्थानं, न तु ब्रह्मसंबन्धितया। कुतः? दृष्टत्वात् 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिषु ज्ञानिनां ब्रह्माभेदप्रतिपादनादित्यर्थः ॥ ४ ॥

ज्योतिश्शब्दस्य प्रकरणबलात् ब्रह्मप्रतिपादकत्वेऽपि वक्ष्यमाणयुक्त्या लक्षणया लीलाशरीरविशिष्टहिरण्यगर्भाख्यसगुणब्रह्मप्रतिपादकत्वमेव वक्तव्यम्। तथा च ज्ञानिनामपि ब्रह्मलोकहिरण्यगर्भप्राप्तिरेव, न तु व्यापकब्रह्मप्राप्तिरिति पूर्वपक्षमाह—

ब्राह्माधिकरणम् ॥ ३ ॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

निर्गुणब्रह्मज्ञानिनोऽपि सगुणब्रह्मोपासकवत् ब्राह्मं निर्गुणब्रह्मसंबन्धिनं हिरण्यगर्भाख्यं सत्यलोकस्थं प्राप्नुवन्तीति जैमिनिर्मन्यते। पूर्वस्मिन् पादे सगुणब्रह्मोपासकानामपि व्यापकब्रह्मप्राप्तिः शङ्किता। अस्मिन् पादे ज्ञानिनामपि हिरण्यगर्भप्राप्तिः शङ्क्यत इति भेदः। कुतः? उपन्यासादिभ्यः 'जक्षत् क्रीडन् रममाणः' इत्यादिवाक्येभ्यः ज्ञानिनामपि जक्षणादिव्यापारप्रतिपादनात्। निर्गुणब्रह्माभेदाङ्गीकारे जक्षणादिव्यापारासंभवात् निर्गुणब्रह्मज्ञानजन्यसगुणहिरण्यगर्भावाप्तिरेव 'परं ज्योतिरुपसंपद्य' इति वाक्ये लक्षणया प्रतिपाद्येत्यङ्गीकर्तव्यमिति भावः। न च हिरण्यगर्भप्राप्तिपक्षे स्वेन रूपेणाभिनिष्पद्यत इति वाक्यमसङ्गतमिति वाच्यम्। स्वेन स्वकीयेन रूपेण शरीरेण हिरण्यगर्भशरीरसदृशशरीरेण विशिष्टः सन् हिरण्यगर्भसमीपे अभिनिष्पद्यते प्रकाशत इत्येवंरूपेण हिरण्यगर्भसारूप्यप्रतिपादकतया 'स्वेन रूपेणाभिनिष्पद्यते' इति वाक्यस्य प्रामाण्योपपत्तेः। तथा च ज्ञानिनामुपासकानां च सर्वेषामपि ब्रह्मलोकप्राप्तिरेव मुक्तिः, न परब्रह्माभेदरूपेति भावः ॥ ५ ॥

सिद्धान्तमाह—

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

निर्गुणब्रह्माभेदध्यानपराणां ज्ञानिनां चितितन्मात्रेण शुद्धचैतन्यमात्रस्वरूपनिर्गुणब्रह्मरूपेणावस्थानमित्यौडुलोमिर्मन्यते । कुतः ? तदात्मकत्वात् तस्मिन्नेव आत्मा अन्तःकरणं येषां ते, तदात्मकत्वात् सर्वदा शुद्धचैतन्यध्यानपरत्वादित्यर्थः । तथा च 'यथाक्रतुरस्मिन् लोके पुरुषो भवति'। 'यं यं वापि स्मरन् भावम्' इत्यादिश्रुतिस्मृत्यनुसारेण व्यापकशुद्धचैतन्यध्यानपराणां शुद्धचैतन्यात्मकव्यापकनिर्गुणब्रह्मरूपेणैवावस्थानमङ्गीकर्तव्यं, न ब्रह्मलोकप्राप्तिरिति भावः ॥ ६ ॥

ज्ञानिनां शुद्धचैतन्यरूपनिर्गुणब्रह्मैक्याङ्गीकारे जक्षणादिव्यापारप्रतिपादकवाक्यस्य का गतिरित्याशङ्क्याह—

## एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

एवमप्युपन्यासात् 'यत्र त्वस्य सर्वमात्मैवाभूत् । आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । आत्मक्रीड आत्मरतिरात्मकामः आत्मलाभान्न परं विद्यते' इत्यादिश्रुतिषु ब्रह्मसाक्षात्कारानन्तरं जक्षणादिसकलव्यापाराभावस्यापि प्रतिपादितत्वात् मोक्षकाले जक्षणादिव्यापारप्रतिपादकानां बहूनां वाक्यानां जक्षणादिव्यापाराभावप्रतिपादकानां बहूनां वाक्यानां च परस्परविरोधात् अप्रामाण्ये प्राप्ते अविरोधं विरोधाभावं बादरायणो मन्यते । कुतः ? पूर्वभावात् ब्रह्मसाक्षात्कारात् पूर्वमुपासकानां मानुषदेवगन्धर्वेन्द्रप्रभृतीनां जक्षणादिव्यापारजन्यानां सकलविषयानन्दानां नित्ये ब्रह्मानन्दे भावात् अन्तर्भावात् तावन्मात्रेण जक्षणादिव्यापारस्य मोक्षकाले उक्तत्वेन स्वार्थे तात्पर्याभावादित्यर्थः । न च जन्यानां विषयानन्दानां नित्ये ब्रह्मानन्दे अन्तर्भाव एवानुपपन्न इति वाच्यम् । स्वरूपानन्दस्यैव स्रक्चन्दनादिविषयसंपर्कजन्यान्तःकरणवृत्तिषु प्रतिबिम्बितस्य विषयानन्दशब्देन व्यवह्रियमाणत्वेन स्वरूपानन्दविषयानन्दयोर्भेदाभावात् । अन्तःकरणवृत्तिनिष्ठजन्यत्वविनाशित्वधर्मयोः वृत्तिप्रतिबिम्बितस्वरूपानन्दे आरोप्यमाणत्वात् विषयतारतम्येन वृत्तितारतम्यात् वृत्तितारतम्येन वृत्तिप्रतिबिम्बितस्वरूपानन्दे तारतम्यप्रतीतेरन्यथासिद्धत्वादिति भावः ॥ ७ ॥

संकल्पाधिकरणम् ॥ ४ ॥

इयता सूत्रसंदर्भेण निर्गुणब्रह्मसाक्षात्कारवतां शुद्धचैतन्यात्मकव्यापकब्रह्मरूपेणावस्थानं प्रतिपाद्य इदानीं सगुणब्रह्मोपासकानां ब्रह्मलोकं गतानां भोगप्रकारं दर्शयति—

संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

उपासकानां संकल्पादेव स्रक्चन्दनवनितादिसकलविषयप्राप्तिर्भवति। कुतः ? तच्छ्रुतेः 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति संकल्पादेवास्य सर्वे देवा गन्धर्वा विद्याधराश्च समुत्तिष्ठन्ति' इति श्रुतौ पितृदेवगन्धर्वादीनां भृत्यवत् परिचारकत्वश्रवणादित्यर्थः ॥ ८ ॥

अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव संकल्पमात्राधीनसकलविषयभोगवत्त्वादेव उपासकः अनन्याधिपतिः न विद्यते अन्यः अधिपतिर्यस्य, सः अनन्याधिपतिः अन्यनियम्यो न भवति, किं तु स्वतन्त्र इत्यर्थः ॥ ९ ॥

बादर्यधिकरणम् ॥ ५ ॥

अभावं बादरिराह ह्येवम् ॥ १० ॥

लिङ्गशरीरमात्रविशिष्टानामुपासकानां स्थूलशरीरस्याभावं बादरिर्मन्यते। कुतः ? आह ह्येवं 'मनसैवैतान् कामान् पश्यन् रमते' इति श्रुतिः स्थूलशरीराभावमुपासकानां प्रतिपादयतीत्यर्थः ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिस्तु स्थूलशरीरस्य भावं मन्यते। कुतः ? विकल्पामननात् ब्रह्मलोकं गतानामुपासकानां बहुश्रुतिषु विकल्पस्य भोगस्य आमननात् स्थूलशरीररहितानां लिङ्गशरीरमात्रविशिष्टानां भोगासंभवादित्यर्थः। 'मनसैवैतान् कामान्' इति वाक्यस्थस्य एवकारस्य अयोगव्यवच्छेदकत्वेन अन्ययोगव्यवच्छेदप्रतिपादकत्वाभावादिति भावः ॥ ११ ॥

एवकारस्य अन्ययोगव्यवच्छेदकत्वमङ्गीकृत्यापि परिहारमाह—

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

अतः 'मनसैवैतानि' इति श्रुतिस्थैवकारबलात् भोगान्यथानुपपत्तिरूपार्थापत्तिप्रमाणाच्च उभयविधत्वं कदाचिल्लिङ्गशरीरमात्रविशिष्टत्वं, कदाचित् स्थूलशरीरविशिष्टत्वमिति कालभेदेन उभयविधत्वमुपासकानाममोघसंकल्पानां संकल्पानुसारेण उपपन्नमिति बादरायणो मन्यते। द्वाद-

शाहवत् यथा द्वादशाहस्य प्रमाणबलात् सत्रत्वम् अहीनत्वं च प्रयोगभेदेनाङ्गीक्रीयते, तद्वदित्यर्थः ॥ १२ ॥

स्थूलशरीराभावकाले कथं भोग इत्याशङ्क्याह—

**तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥**

तन्वभावे स्थूलशरीराभावकाले सन्ध्यवत् स्वप्नावस्थायामिव उपपत्तेः प्रातिभासिकभोगोपपत्तेरित्यर्थः ॥ १३ ॥

**भावे जाग्रद्वत् ॥ १४ ॥**

भावे स्थूलशरीरस्य सद्भावे जाग्रद्वत् जाग्रदवस्थायामिव व्यावहारिकभोगोपपत्तेरित्यर्थः ॥ १४ ॥

प्रदीपाधिकरणम् ॥ ६ ॥

उपासकानामुपासनासामर्थ्यात् योगिनामिव कायव्यूहनिर्माणेन अनेकशरीरेषु युगपत् भोगमाह—

**प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥**

उपासकस्य ब्रह्मलोकस्थस्य स्वेच्छया निर्मितेषु अनेकशरीरेषु युगपदेव आवेशः प्रवेशः अभिमानः अङ्गीकर्तव्यः प्रदीपवत् । यथा एकस्य प्रदीपस्य तैलसिक्तासु सहस्रसङ्ख्याकासु वर्तिषु युगपत् प्रवेशस्तद्वदित्यर्थः । तथा हि दर्शयति—'स एकधा भवति द्विधा भवति त्रिधा भवति' इत्यादिश्रुतिः उपासकानां संकल्पमात्रेणैव अनेकशरीरनिर्मातृत्वं दर्शयतीत्यर्थः ॥ १५ ॥

सगुणब्रह्मोपासकानामर्चिरादिमार्गेण ब्रह्मलोकप्राप्त्यनन्तरक्षण एव व्यापकनिर्गुणब्रह्माभेदं प्राप्तानां कथं कायव्यूहनिर्माणं, कथं वा भोग इत्याशङ्क्याह—

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥**

स्वाप्ययः सुषुप्त्यवस्था, संपत्तिः मोक्षावस्था, सुषुप्त्यवस्थामोक्षावस्थयोर्मध्ये अन्यतरापेक्षम् अन्यतरावस्थासंबन्ध्येव जीवानां ब्रह्माभिन्नत्वं श्रुतिषु आविष्कृतं प्रतिपादितमित्यर्थः । तथा च उपासकानां ब्रह्मलोकप्राप्त्यनन्तरमेव न व्यापकब्रह्मैक्यम् । श्रुतिषु तथा अप्रतिपादनात् देहाद्यभिमाननिवृत्तिकालेष्वेव जीवानां ब्रह्माभेदप्रतिपादनात् ब्रह्मलोकप्राप्तिमात्रेण देहाद्यभिमाननिवृत्तेरभावाच्च । किं तु कंचित्कालं ब्रह्मलोकस्थभोगानन्तरं क्रमेण ब्रह्मसाक्षात्कारानन्तरं हिरण्यगर्भेण सह व्यापकब्रह्मैक्यरूपा मुक्तिरिति भावः ॥ १६ ॥

जगद्व्यापाराधिकरणम् ॥ ७ ॥

उपासकानां स्वेच्छया कायव्यूहनिर्मातृत्वाङ्गीकारे देवगन्धर्वमनुष्यपशुपक्ष्यादिशरीरस्रष्टृत्वमप्युपासकानां स्यादित्याशङ्क्याह—

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

जगद्व्यापारवर्जं देवगन्धर्वादिशरीरजगत्सृष्टिव्यापारं वर्जयित्वा स्वभोगसाधनीभूतकायव्यूहादिनिर्माणसामर्थ्यमात्रमेव उपासकानाम् । देवगन्धर्वादिशरीरसृष्टिव्यापारस्तु हिरण्यगर्भस्यैव । कुतः ? प्रकरणात् हिरण्यगर्भप्रकरणेष्वेव हिरण्यगर्भस्य देवादिशरीरस्रष्टृत्वप्रतिपादनात् कुत्राप्युपासनाप्रकरणेषु उपासकानां स्वशरीरव्यतिरिक्तदेवादिशरीरस्रष्टृत्वाप्रतिपादनादित्यर्थः । किं च असंनिहितत्वाच्च ' हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ' ' यो ब्रह्माणं विदधाति पूर्वम् ' इत्यादिश्रुतिषु देवासुरादिसकलभूतोत्पत्तेः पूर्वमेव हिरण्यगर्भस्य साक्षात्परब्रह्मजन्यत्वप्रतिपादनेन परब्रह्म प्रति संनिहितत्वात् अन्तरङ्गत्वात् देवासुरभूतप्रेतपिशाचादिसकलभूतनिर्माणसामर्थ्यमस्ति । उपासकानां तु मन्वाद्यनेकभूतपरम्परया हिरण्यगर्भजन्यत्वेन साक्षात्परब्रह्मजन्यत्वाभावेन असंनिहितत्वात् परमात्मानं प्रति अन्तरङ्गत्वाभावाच्च देवादिभूतनिर्माणसामर्थ्यं नास्तीत्यर्थः ॥ १७ ॥

उपासकानामिव हिरण्यगर्भस्यापि देवादिभूतस्रष्टृत्वं नास्ति । पुरुषसूक्ते परमात्मन एव देवादिभूतस्रष्टृत्वप्रतिपादनादित्याशङ्क्य निराकरोति—

प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

प्रत्यक्षोपदेशात् ' तेन देवा अयजन्त साध्या ऋषयश्च ये ' इत्यादिश्रुतिषु परमात्मन एव देवादिसकलस्रष्टृत्वस्य साक्षादुपदिष्टत्वात् नेति चेत् हिरण्यगर्भस्य देवादिभूतस्रष्टृत्वं नास्तीति चेत्, न । आधिकारिकमण्डलस्थोक्तेः आधिकारिकस्य परब्रह्माज्ञावशवर्तिनः मण्डलस्थस्य ब्रह्माण्डमण्डलाभिमानिनः विराट्पुरुषनामकस्य ब्रह्मलोकेऽपि चतुर्मुखलीलाविग्रहं धृत्वा विद्यमानस्य हिरण्यगर्भस्य उक्तेः पुरुषसूक्ते देवादिभूतस्रष्टृत्वप्रतिपादनात् न परमात्मनः साक्षात् देवासुरादिभूतस्रष्टृत्वं, किं तु हिरण्यगर्भद्वारैवेत्यर्थः ॥ १८ ॥

तर्हि पुरुषसूक्ते प्रतिपाद्यस्य हिरण्यगर्भस्यैव देवासुरादिभौतिकसकलशरीरस्रष्टृत्ववत् पञ्चमहाभूतस्रष्टृत्वस्यापि संभवात् हिरण्यगर्भ, एव

परब्रह्मस्थानाभिषिक्तो भवतु, तदतिरिक्तं परं ब्रह्म किमर्थमङ्गीकर्तव्यमित्याशङ्क्याह—

विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥

विकारावर्ति विकारासंस्पृष्टं ब्रह्माण्डमध्ये विद्यमानमपि ब्रह्माण्डाभिमानरहितं हिरण्यगर्भातिरिक्तं परं ब्रह्माङ्गीकर्तव्यम्। कुतः ? तथा हि स्थितिमाह—'पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि' इति पुरुषसूक्तस्थश्रुतिरेव हिरण्यगर्भातिरिक्तस्य परब्रह्मणः अवस्थानं प्रतिपादयतीत्यर्थः। 'पादोऽस्य विश्वा भूतानि' इति श्रुतेरयमर्थः—अस्य परब्रह्मणः सर्वाणि भूतानि चतुर्मुखादिपिपीलिकान्तसकलशरीराणि प्रविश्य सकलशरीरेषु विद्यमानसकलशरीराभिमानविशिष्टं सकलभूतसंबन्धि सुखदुःखहर्षशोकभयादिसमन्वितं विराटपुरुषचैतन्यमेकः पाद एकांशः दिवि ब्रह्माण्डमध्ये विद्यमानमपि ब्रह्माण्डान्तर्वर्तिसकलशरीराभिमानरहितम् अमृतं मरणभयशोकादिरहितं शुद्धचैतन्यं त्रिपात् अंशत्रयवदित्यर्थः ॥ १९ ॥

हिरण्यगर्भातिरिक्तपरब्रह्मसद्भावे पुरुषसूक्तातिरिक्तं प्रमाणान्तरमप्याह—

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

प्रत्यक्षानुमाने 'द्वे ब्रह्मणी वेदितव्ये परं चापरं च' 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इति श्रुतिस्मृती हिरण्यगर्भातिरिक्तं परब्रह्म दर्शयतः प्रतिपादयत इत्यर्थः। तथा च परब्रह्मण एव पञ्चमहाभूतस्रष्टृत्वं हिरण्यगर्भस्य तु परब्रह्मणः आज्ञया चराचरसकलभौतिकशरीरस्रष्टृत्वमिति भावः ॥ २० ॥

एवं प्रसङ्गादागतं परब्रह्महिरण्यगर्भयोर्भेदविचारं परिसमाप्य प्रस्तुते उपासकानां देवासुरादिशरीरस्रष्टृत्वाभावे हेत्वन्तरमाह—

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

हिरण्यगर्भस्य यादृशो भोगः, तादृशो भोगः उपासकानामप्यस्तीति भोगमात्रसादृश्यस्यैव श्रुतिषु प्रतिपादितत्वात् सर्वात्मना हिरण्यगर्भसादृश्यस्य अप्रतिपादितत्वाच्च अस्मादपि लिङ्गात् ज्ञापकात् नोपासकानां देवादिशरीरस्रष्टृत्वमित्यर्थः। इदमुपलक्षणम् उपासकानां स्वातन्त्र्येण देवासुरादिभौतिकशरीरस्रष्टृत्वमित्यङ्गीकारे परस्परकलहप्रसङ्गात् हिरण्यगर्भाज्ञावशवर्तित्वेनैव उपासकानां स्रष्टृत्वं वक्तव्यम्। तथा च आत्रय-

कत्वात् लाघवाच्च एकस्यैव हिरण्यगर्भस्य भौतिकशरीरस्रष्टृत्वमङ्गीकर्तव्यं, नानेकेषामुपासकानामिति भावः ॥ २१ ॥

ब्रह्मलोकं गतानां सर्वेषामपि ब्रह्मणा सह मुक्तिर्वा, उत केषांचित् ब्रह्मणा सह मुक्तिः, केषांचित् कंचित्कालं भोगानन्तरं भूलोकादिषु पुनरावृत्तिर्वा इति संशये प्राप्ते निर्णयं करोति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

ब्रह्मलोकं गतानां सर्वेषामुपासकानाम् अनावृत्तिः भूलोकादिषु पुनरावृत्त्यभाव एवाङ्गीकर्तव्यः। कुतः ? शब्दात् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति श्रुतेरित्यर्थः। अनावृत्तिशब्दस्य द्विरुक्तिरध्यायपरिसमाप्तिद्योतनार्था। न च गङ्गाशन्तनुचक्रवर्तिप्रभृतीनां ब्रह्मलोकवासिनामपि हिरण्यगर्भशापवशात् भूलोकं प्रत्यावृत्तिः पुराणादिषु प्रतिपाद्यत इति वाच्यम्। ब्रह्मलोकवासिभिः कैश्चिदपि रागद्वेषादिकं न कर्तव्यमिति ब्रह्मलोकवासिनां शिक्षार्थं हिरण्यगर्भेण शापे कृते सति तं शापं कंचित्कालं भूलोके अनुभूय पुनः ब्रह्मलोकं गतानां शन्तनुचक्रवर्तिप्रभृतीनां ब्रह्मणा सह मुक्तेः तेष्वेव पुराणेषु प्रतिपादितत्वेन विरोधाभावादिति भावः ॥ २२ ॥

इति ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः ॥

---

## ॥ अध्यायश्च संपूर्णः ॥



# वेदान्तसारः

## सुबोधिनीसहितः ।



अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥ १ ॥

---

कृष्णानन्दं गुरुं नत्वा परमानन्दमद्वयम् ।
वक्ष्ये वेदान्तसारस्य टीकां नाम्ना सुबोधिनीम् ॥

इह खलु कश्चिन्महापुरुषो नित्याध्ययनविध्यधीतसकलवेदराशीनां चिन्मात्राश्रयतद्रूपाद्वयानन्दविषयानाद्यनिर्वचनीयभावरूपाज्ञानविलसितानन्तभवानुष्ठितकाम्यनिषिद्धवर्जितनित्यनैमित्तिकप्रायश्चित्तोपासनाकर्मभिः सम्यक्प्रसन्नेश्वराणामिष्टिकाचूर्णादिसंघर्षितादर्शतलवदतिनिर्मलाशयानां नलिनीदलगतजलबिन्दुवद्धिरण्यगर्भादिस्तम्बपर्यन्तं जीवजातं स्वात्मवन्मृत्योरास्यान्तर्गतं क्षणभङ्गुरं तापत्रयाग्निसन्दह्यमानमनिशमात्मन्यनुपश्यतामतिविवेकिनामतएवैहिकस्रक्चन्दनादिविषयभोगेभ्य आमुष्मिकहैरण्यगर्भाद्यमृतभोगेभ्यश्च वान्ताशन इवातिनिर्विण्णमानसानां शमादिसाधनसम्पन्नानामापाततोऽधिगताखिलवेदार्थत्वाद्देहाद्यहङ्कारपर्यन्तं जडपदार्थतद्विलक्षणस्वप्रकाशस्वरूपे प्रत्यगात्मनि ब्रह्मानन्दत्वे संशयापन्नानां तज्जिज्ञासूनामल्पश्रवणेन मूलाज्ञाननिवृत्तिपरमानन्दावाप्तिसिद्धये प्रकरणमारभमाणः समाप्तिप्रचयगमनादिफलकशिष्टाचारपरिप्राप्तेष्टदेवतानमस्कारलक्षणमङ्गलाचरणस्यावश्यकर्तव्यतां प्रदर्शयँल्लक्षणयानुबन्धचतुष्टयं निरूपयन् परमात्मानं नमस्कुरुतेऽखण्डमित्यादिना । अभीष्टस्य निःश्रेयसस्य सिद्धये प्राप्त्यर्थम् । आत्मानमाश्रये । एकत्वेन प्रतिपद्य इत्यर्थः । नन्वविषयस्यात्मनः कथं प्रतिपत्तिरित्याशङ्क्याह अखिलाधारमिति । अखिलस्य चराचरात्मकप्रपञ्चस्य विवर्ताधिष्ठानत्वेन कारणत्वाक्रान्तं ब्रह्मैव प्रतिपद्ये न तु शुद्धमित्यर्थः । नन्वेवं च सति प्रति-

---

1. See Notes on this verse.

---

२. For this simile see *Bhāmatī* 1. 1. 4 (p. 95 Bib. Ind.).

अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः ।
गुरूनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥ २ ॥

वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च । अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासि-

पत्तिविषयत्वेन दृश्यत्वापत्तिमाशङ्क्याह अवाङ्मनसगोचरमिति । "यतो वाचो निवर्तन्त" इत्यादिश्रुतिभिरविषयत्वप्रतिपादनात् । प्रतिपत्तिविषयत्वं कारणत्वोपलक्षितब्रह्मविषयत्वेनौपचारिकमिति भावः । नन्वेवमपि कारणत्वे मृत्पिण्डवदनित्यत्वशङ्कामपहरन्नाह सदिति । नाशाभावोपलक्षितस्वरूपं "सदेव सौम्य" इत्यादिश्रुतेः । ननु तथापि जडत्वापत्तिमाशङ्क्याह चिदिति । स्वप्रकाशचैतन्यस्वरूपमिति यावत् । ननु तथाप्यपुरुषार्थत्वात्किमित्याश्रयणीयमित्यत आह आनन्दमिति । परमानन्दस्वरूपमित्यर्थः । ननु "भक्षितेऽपि लशुने न शान्तो व्याधिः" इति न्यायेन प्रपञ्चस्याधिष्ठानव्यतिरिक्ततया प्रतीयमानत्वात्कथमद्वैतसिद्धिरित्याशङ्कां तृणीकुर्वन्नाह अखण्डमिति । सजातीयविजातीयस्वगतभेदशून्यमित्यर्थः । अत्र सच्चिदानन्दमिति प्रयोजनमखण्डमिति विषयः शास्त्रविषययोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धस्तत्कामोऽधिकारीत्यनुबन्धचतुष्टयमर्थादुक्तं भवति ॥ १ ॥

किञ्च "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन" इत्यादिश्रुत्या गुरुनमस्कारस्यापि शास्त्राङ्गत्वप्रतिपादनात्तन्नमस्कारोऽपि पृथक्त्वेन कार्य इति तन्नतिपूर्वकमभिधेयमन्यं प्रतिजानीते अर्थतोऽपीति । अपिशब्देन न केवलं शब्दतो डित्थादिवत्संज्ञामात्रं व्यवस्थितमपित्वर्थतः शब्दतश्चेति । अद्वयानन्दान् गुरूनाराध्य वेदान्तसारं यथामति वक्ष्य इत्यन्वयः । अद्वयाश्च ते आनन्दाश्चाद्वयानन्दास्तानद्वयानन्दान् । तत्र हेतुमाह अतीतद्वैतभानत इति । अतीतं गतं द्वैतभानं यतस्तस्मादतीतद्वैतभानतः । निरस्तसमस्तभेदज्ञानत्वादित्यर्थः । तान् गुरूनाराध्य कायवाङ्मनोभिर्नमस्कारगोचरीकृत्य । वेदान्तसारं वेदान्तानामुपनिषद्वाक्यजातानां मध्ये यत्सारं सिद्धान्तरहस्यं यस्मिन् ज्ञाते पुनर्ज्ञातव्यं नावशिष्यते तं वेदान्तसारं यथामति बुद्धिमनतिक्रम्य वक्ष्ये प्रतिपादयिष्य इत्यर्थः ॥ २ ॥

इदानीं सर्वस्यापि वस्तुविचारोद्देशपूर्वकत्वात्प्रतिज्ञातं वेदान्तं नामतो

१. *Tait.* 2. 4. 1. २. *Chhā.* 6. 2. 1. ३. See *Maxims* i (2nd edn.). ४. *S'wet.* vi. 23.

द्धेर्न ते पृथगालोचनीयाः । तत्रानुबन्धो नामाधिकारिविषयसम्बन्धप्रयोजनानि ॥ ३ ॥

अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः

---

निर्दिशति वेदान्तो नामेति । उपनिषद एव प्रमाणमुपनिषत्प्रमाणम् । उपनिषदो यत्र प्रमाणमिति वा । तदुपकारीणि वेदान्तवाक्यसङ्ग्राहकाणि शारीरकसूत्रादीनि "अथातो ब्रह्मजिज्ञासा"[१] इत्यादीनि सूत्रादीनि । आदिशब्देन भगवद्गीताद्यध्यात्मशास्त्राणि गृह्यन्ते तेषामप्युपनिषच्छब्दवाच्यत्वादिति भावः । ननु यद्यप्यवान्तरानुबन्धचतुष्टयमापद्येतेति निर्दिष्टं तथापि परमानुबन्धचतुष्टयस्यानिरूपितत्वादत्र प्रेक्षावतां प्रवृत्तिर्न स्यादित्यत आह अस्य वेदान्तेति । अस्य वेदान्तसारस्येत्यर्थः । ननु वेदान्तशास्त्रस्यापि किमनुबन्धचतुष्टयं येनास्यापि तद्वत्तासिद्धिरित्याशङ्क्य मूलशास्त्रस्यानुबन्धचतुष्टयमाविष्करोति तत्रानुबन्ध इति । अनुबन्धचतुष्टयमेवाह अधिकारीत्यादिना ॥ ३ ॥

यथोद्देशमधिकारिणं लक्षयति अधिकारी त्विति । "स्वाध्यायोऽध्येतव्य"[२] इति वचनात्त्रैवर्णिकानामुपनीतानामध्ययनं नियमेन विधीयते । अध्ययनविधिप्रयुक्तमेवाध्ययनं नाध्यापनविधिप्रयुक्तम् । तथा चाधीतो वेदो वेदाङ्गानि च शिक्षाकल्पव्याकरणछन्दोज्योतिर्निरुक्ताख्यानि यतस्तेनापाततोऽधिगताखिलवेदार्थः । अत्र सर्ववेदार्थरहस्ये ज्ञाते सत्युत्तरग्रन्थवैयर्थ्यपरिहाराय आपातत इत्युक्तम् । नन्वनधीतवेदानामपि विदुरादीनां तत्त्वज्ञानोत्पत्तिदर्शनादध्ययनतत्प्रयुक्तकर्मानुष्ठानवैयर्थ्यमाशङ्क्योत्तरमाह जन्मान्तर इति । तेषामाधुनिकाध्ययनाद्यभावेऽपि जन्मान्तरीयाध्ययनादिना चित्तपरिपाकवतामस्मिन् जन्मनि विनाप्यध्ययनादिना ज्ञानोत्पत्तौ बाधकाभावान्नाध्ययनादिवैयर्थ्यमिति भावः । काम्येति । काम्यस्यापि कर्मणो धर्मसाधनत्वेऽपि यातायातसम्पादकत्वेन बन्धकत्वान्निषिद्धवत्तद्वर्जनपुरःसरमित्युक्तम् । तथा च नित्यादिकर्मानुष्ठानेन निर्गतनिखिलकल्मषतया निःशेषनिरस्तसकलकल्मषत्वेन । अत्र निखिलपदं काम्यनिषिद्धजनितसु-

---

१. *Brahmasūtra* 1. 1. 1.  २. *Tait. Araṇyaka* 2. 15. 7.

प्रमाता । काम्यानि स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि । निषिद्धानि नरकाद्यनिष्टसाधनानि ब्राह्मणहननादीनि । नित्यान्यकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि । नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि । प्रायश्चित्तानि पापक्षयसाधनानि चान्द्रायणादीनि । उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि । एतेषां नित्यादीनां बुद्धिशुद्धिः परं प्रयोजनमुपासनानां तु चित्तैकाग्र्यं "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इत्यादिश्रुतेः "तपसा कल्मषं हन्ति" इत्यादिस्मृतेश्च । नित्यनैमित्तिकप्रायश्चित्तोपासनानां त्ववान्तरफलं पितृलोकसत्यलोकप्राप्तिः "कर्मणा पितृलोको विद्यया देवलोक" इत्यादिश्रुतेः । साधनानि नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमादिषट्कसम्पत्तिमुमुक्षुत्वानि । नित्यानित्यवस्तुविवेकस्तावद्ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम् । ऐहिकानां स्रक्चन्दनवनितादिविषयभोगानां कर्मजन्यतयानित्यत्ववदामुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतया

कृतदुष्कृतपरम् । तेन नितान्तनिर्मलस्वान्तः । नितान्तमत्यन्तं निर्मलं स्वच्छं स्वान्तमन्तःकरणं यस्य स तथोक्तो वक्ष्यमाणसाधनचतुष्टयसम्पन्नः प्रमाता । अन्तःकरणे प्रतिबिम्बितं चैतन्यमित्यर्थः । एतदेव स्पष्टं व्याकरोति काम्यानीत्यादिना । तत्र शमं लक्षयति शमस्तावदिति । यथा तीव्रायां बुभुक्षायां भोजनादन्यो व्यापारो मनसो न रोचते भोजने विलम्बं च न सहते तथा स्रक्चन्दनादिविषयेष्वत्यन्तमरुचिस्तत्त्वज्ञानसाधनेषु श्रवणमननादिष्वत्यन्तमभिरुचिर्जायते । तदा पूर्ववासनाबलाच्छ्रवणादिसाधनेभ्य उ-

1 ABDJL. prefix कृच्छ्र. 2. *Brih.* 4. 4. 22. 3. *Manu* xii. 104; BDGH. add the other half of the line. 4. So ABCEF-JKL; but Rāmatirtha, with DGH, excludes प्रायश्चित्त as having no other known result than that of the removal of guilt. 5. *Brih.* 1. 5. 16. 6. °सम्पत्° AD. 7. °स्वादीनि AC. 8. अनित्यत्वात् BCGJ.

तेभ्यो नितरां विरतिरिहामुत्रार्थफलभोगविरागः। शमादयस्तु शमदमोपरतितितिक्षासमाधानश्रद्धाख्याः। शमस्तावच्छ्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः। दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम्। निवर्तितानामेतेषां तद्व्यतिरिक्तविषयेभ्य उपरमणमुपरतिरथवा विहितानां कर्मणां विधिना परित्यागः। तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता। निगृहीतस्य मनसः श्रवणादौ[1] तदनुगुणविषये च समाधिः समाधानम्। गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा। मुमुक्षुत्वं मोक्षेच्छा। एवम्भूतः प्रमाताधिकारी "शान्तो दान्त" इत्यादिश्रुतेः[2]। उक्तं[3] च।

---

ष्ठीय स्रक्चन्दनादिविषयेषु गम्यमानं मनो येनान्तःकरणवृत्तिविशेषेण निगृह्यते स वृत्तिविशेषः शम इत्यर्थः। इदानीं दमस्य लक्षणमाह दम इत्यादि। ज्ञानसाधनश्रवणादिसाधनेभ्यो विलक्षणेषु शब्दादिविषयेषु प्रवर्त्तमानानि श्रोत्रादीनि बाह्येन्द्रियाणि येन वृत्तिविशेषेण निवर्त्यन्ते स दम इत्यर्थः। इदानीमुपरतेर्लक्षणमाह निवर्तितानामिति। निगृहीतानामेव तेषां बाह्येन्द्रियाणां श्रवणादिसाधनव्यतिरिक्तेषु शब्दादिविषयेषु यथा तानीन्द्रियाणि सर्वथा न गच्छन्ति तथा तेषां निग्रहो येन वृत्तिविशेषेण क्रियते सोपरतिरित्यर्थः। उपरतेर्लक्षणान्तरमाह अथवा विहितानामिति। विहितानां नित्यादिकर्मणां विधिना चतुर्थाश्रमस्वीकारेण परित्यागः। नाहं कर्तेत्यवस्थानमुपरतिरित्यर्थः। तितिक्षाया लक्षणमाह तितिक्षेति। शरीरधर्मस्य शीतोष्णादेस्तज्जन्यसुखदुःखादेश्च शरीरस्य त्यक्तुमशक्यत्वात्स्वप्रकाशचिद्रूपे स्वात्मनि च शीतोष्णादेरत्यन्ताभावादिति विवेकदीपेन मिथ्याभूतस्य शीतोष्णादेर्द्वन्द्वस्य यत्सहनं सा तितिक्षेत्यर्थः। इदानीं समाधानलक्षणमाह निगृहीतस्येति। शब्दादिविषयेभ्यो निगृहीतस्यान्तःकरणस्य श्रवणादौ तदनुगुणेषु तदुपकारकेष्वमानित्वादिसाधनविषयेषु समाधिर्नैरन्तर्येण तच्चिन्तनं समाधानमित्यर्थः। श्रद्धादयः स्पष्टार्थाः। तथा च पूर्वोक्तसकलविशेषणविशिष्टः प्रमाताधिकारीत्यर्थः। अस्मिन्नर्थे श्रुतिं प्रमाणयति शान्त इत्यादि।

---

1. See Notes. 2. *Brih.* 4. 4. 23. 3. *Upadeśasāhasrī* 324 (xvi. 72).

---

१. °मानस्य KL.

"प्रशान्तचित्ताय जितेन्द्रियाय च
प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत्सततं मुमुक्षव" इति ॥

विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं तत्रैव वेदान्तानां तात्पर्यात् । सम्बन्धस्तु तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावः । प्रयोजनं तु तदैक्यप्रमेयगताज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च "तरति शोकमात्मवित्" इत्यादिश्रुतेः "ब्रह्मविद्ब्रह्मैव भवति" इत्यादिश्रुतेश्च ॥ ४ ॥

अयमधिकारी जननमरणादिसंसारानलसन्तप्तो दीप्तशिरा

---

यथोद्देशं विषयं निरूपयति विषय इति । अविद्याध्यारोपितसर्वज्ञत्वकिंचिज्ज्ञत्वादिविरुद्धधर्मपरित्यागेनावशिष्टं शुद्धं चैतन्यं ज्ञेयस्वरूपमेव सर्वेषां वेदान्तवाक्यानां विषय इत्यर्थः । क्रमप्राप्तं सम्बन्धं लक्षयति सम्बन्धस्त्विति । बोध्यबोधकभाव इति । बोध्यस्य ब्रह्मात्मैक्यस्वरूपस्य बोधकस्य वेदान्तशास्त्रस्य च बोध्यबोधकभाव एव सम्बन्ध इत्यर्थः । अवशिष्टं प्रयोजनमाह प्रयोजनं त्विति । ब्रह्मात्मैकत्वलक्षणचिन्मात्रगताज्ञानतत्कार्यसकलप्रपञ्चनिवृत्तिः पुनरुत्पत्त्यभावरूपा स्वस्वरूपाखण्डानन्दप्राप्तिः फलमित्यर्थः । ननु लोकेऽप्राप्तस्य क्रियासाध्यस्य स्वर्गादेः पुरुषार्थत्वेन फलत्वं दृष्टमत्र तु नित्यप्राप्तस्यात्मस्वरूपस्य क्रियासाध्यत्वाभावेन पुरुषार्थत्वाभावात्कथं फलत्वमिति चेन्न तस्यैव पुरुषार्थत्वनियमाभावात् । यथा लोके कस्यचिद्विस्मृतकण्ठमणेस्तत्प्रयुक्तशोकाग्निसन्दह्यमानस्याप्तोपदेशोत्तरकालं स्वकण्ठगतचामीकरप्राप्तेरपि पुरुषार्थत्वात्फलत्वं दृष्टमेवमत्रापि नित्यप्राप्तस्यात्मनोऽज्ञानमोहान्धकारावृतत्वेन विस्मृतस्वस्वरूपस्य पुरुषस्य गुरुश्रुतिवाक्यश्रवणानन्तरमज्ञानमोहान्धकारनिवृत्तौ सत्यां स्वयम्प्रकाशमानचिद्रूपस्य सिद्धस्यैवात्मनः फलत्वमुपचर्यत इति भावः । उक्तेऽर्थे श्रुतिं प्रमाणयति तरतीति ॥ ४ ॥

अधुना शास्त्रारम्भनिमित्ताधिकार्यादिनिरूपणानन्तरं शास्त्रारम्भं प्रस्तौत्यथवा लक्षितस्याधिकारिणः कर्तव्यं दर्शयति अयमधिकारीति । उक्तलक्ष-

---

1. सकलं CEF. 2. *Chhā.* 7. 1. 3. 3. *Muṇḍ.* 3. 2. 9, modified.

---

1. See कण्ठचामीकरन्याय in *Maxims* ii ( 2nd. edn.)

जलराशिमिवोपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" इत्यादिश्रुतेः। स परमकृपयाध्यारोपापवादन्यायेनैनमुपदिशति "तस्मै स विद्वानुपसन्नाय प्राह" इत्यादिश्रुतेः ॥ ५ ॥

असर्पभूते रज्जौ सर्पारोपवद्वस्तुन्यवस्त्वारोपोऽध्यारोपः।

---

लक्षितो बुद्धिसन्निहितोऽधिकारी गुरुमुपसरतीत्यर्थः । ननु संसारासक्तचित्तस्य विषयलोलुपस्यार्तिरहितस्य गुरूपसर्पणमयुक्तमित्याशङ्क्याह संसारानलसन्तप्त इति । सन्तापे हेतुमाह जननेति । आदिशब्देन व्याध्यादयो गृह्यन्ते । अग्निदग्धमस्तको दाहनिवृत्तिकामो यथा शीतलं जलराशिमनुसरति तथा संसारतापत्रयदन्दह्यमानस्तन्निवृत्तिकामः स्वस्वरूपजिज्ञासुः संसारनिवर्तकं श्रोत्रियं ब्रह्मनिष्ठं करतलामलकवत्स्वप्रकाशात्मस्वरूपसमर्पकं गुरुं समीपं गत्वानुसरति मनोवाक्कायकर्मभिः सेवत इत्यर्थः । अस्मिन्नर्थे श्रुतिमुदाहरति समित्पाणिरिति । अथ गुरुकृत्यमाह स इति । स पूर्वोक्तो गुरुरेनं शिष्यमुपदिशतीत्यन्वयः । परमरहस्यमपि ब्रह्मस्वरूपं कस्मादुपदिशतीत्यत आह कृपयेति । कृपाव्यतिरेकेण साधनान्तराभावादित्यर्थः । नन्वखण्डस्य ब्रह्मस्वरूपस्यागोचरत्वेनोपदेष्टुमशक्यत्वात्कथमुपदिशतीत्यत आह अध्यारोपेति । अखण्डब्रह्मस्वरूपस्यागोचरत्वेन विधिमुखत्वेनोपदेष्टुमशक्यत्वेऽपि "नेह नानास्ति किञ्चन" इत्यादिश्रुतिमनुसृत्याविद्यारोपितमिथ्यानानापदार्थनिषेधमुखेनोपलक्षितमखण्डचैतन्यमेव पुनः "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिमनुसृत्य लक्षणया विधिमुखेनाप्युपदिशतीति भावः । तत्र श्रुतिमाह तस्मा इति ॥ ५ ॥

अस्मिन्नर्थे लौकिकदृष्टान्तमाह असर्पभूत इति । व्यावहारिकवस्तुत्वेनाभिमते रज्जौ अवस्तुभूतसर्पारोपो नाम रज्ज्ववच्छिन्नचैतन्यस्थाविद्या सर्पज्ञानाभासाकारेण परिणममाना सर्पाकारेण विवर्तते स विवर्तो रज्ज्ववच्छिन्नचैतन्यनिष्ठाविद्योपादानत्वेन नायं सर्पः किन्तु रज्जुरिति विशेषदर्शनोत्तरकालीनाधिष्ठानरज्जुसाक्षात्कारेण रज्ज्वज्ञाननिवृत्तौ सर्पभ्रान्तिर्निवर्तत इत्यर्थः ।

---

1. *Mund.* 1. 2. 12. 2. See Notes. 3. So all the Mss; BJ. insert आत्मतत्त्वं before प्राह. 4. *Mund.* 1. 2. 13.

---

१. See करविन्यस्तबिल्वन्याय in *Maxims* ii (2nd. ed.). २. *Brih.* 4. 4. 19. ३. पदार्थापवाद॰ EK. ४. *Tait.* 2. 1. ५. व्यावहारिके ECL

वस्तु सच्चिदानन्दोनन्ताद्वयं ब्रह्म। अज्ञानादिसकलजडसमूहोऽवस्तु। अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्त्यहमज्ञ इत्याद्यनुभवात् "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतेश्च ॥ ६ ॥

इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते। तथाहि यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्व-

उक्तमर्थं दार्ष्टान्तिके योजयति वस्त्विति। कालत्रयानपाय्यात्मैव वस्तुशब्दार्थः। तत्रावस्तुस्वरूपमाह अज्ञानादीति। अज्ञानतज्जन्यव्योमादेर्मिथ्यात्वाद्दृश्यत्वात्सावयवत्वाद्विकारित्वात्सापेक्षसिद्धिकत्वादितिहेतुभिरवस्तुत्वमित्यर्थः। एतदेव विस्तरेण प्रतिपादयितुमज्ञानस्वरूपं तावदाह अज्ञानं त्विति। किमिदमज्ञानं सद्रूपमसद्रूपं वा। नाद्यस्तस्य शशविषाणतुल्यत्वेन तुच्छत्वात्। नापि द्वितीयोऽसतः कारणत्वानुपपत्तेरित्यादिहेतुभिः सत्त्वेनासत्त्वेन वा निरूपयितुं न शक्यत इत्याह अनिर्वचनीयमिति। नन्वज्ञानस्यानिर्वचनीयत्वे सर्वथा ज्ञातुमशक्यत्वात्तदभावप्रसङ्गमाशङ्क्याह त्रिगुणात्मकमिति। "अजामेकां" इत्यादिश्रुतिभिः सत्त्वरजस्तमोगुणात्मकत्वप्रतिपादनादित्यर्थः। नन्वेवमजस्याज्ञानस्य श्रुतिप्रसिद्धस्य व्योमादिरूपेण विततस्य सत्यत्वज्ञानमानत्वेन संसारानिवृत्तिमाशङ्क्याह ज्ञानविरोधीति। एतादृशमप्यज्ञानमात्मसाक्षात्कारेण निवर्तत इत्यर्थः। तदुक्तं भगवता। "दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति। ज्ञानाभाव एवाज्ञानमिति तार्किकमतं निराकरोति भावरूपमिति। त्रिगुणात्मकभावरूपत्वेऽपीदमित्थमेवेति पिण्डीकृत्य प्रदर्शयितुं न शक्यत इत्याह यत्किञ्चिदिति। किमप्यघटितघटनापटीय इत्यर्थः। अनिर्वचनीयानादिभावरूपाज्ञानसद्भावेऽनुभवमेवोदाहृत्य दर्शयति अहमज्ञ इति। अहमज्ञो मामहं न जानामीत्यपरोक्षावभास एव प्रमाणमित्यर्थः। तस्यैवोपष्टम्भकत्वेन श्रुतिमुदाहरति देवात्मशक्तिमिति ॥ ६ ॥

अज्ञानं विभजत इदमिति। वस्तुतोऽज्ञानस्यैकत्वेऽपि समष्ट्यभिप्रायेणैकमिति व्यवह्रियते व्यष्ट्यभिप्रायेणानेकमित्यर्थः। एतदेव प्रपञ्चयितुं प्रतिजानीते तथाहीति। यथा बहूनां वृक्षाणां समुदायविवक्षया वनमित्ये-

1. ACGJ. omit अनन्त. 2. See Notes. 3. *S'wet.* 1. 3.

१. *S'wet.* 4. 5. २. *Gitá* vii. 14.

व्यपदेशो यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्वव्यपदेशो "ऽजामेका" इत्यादिश्रुतेः । इयं समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना । एतदुपहितं चैतन्यं सर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते सकलाज्ञानावभासकत्वात् । "यः सर्वज्ञः सर्ववित्" इतिश्रुतेः । ईश्वरस्येयं समष्टिरखिलकारणत्वात्कारणशरीरमानन्दप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानन्दमयकोशः सर्वोपरमत्वात्सुषुप्तिरत एव

---

कत्वव्यपदेशो यथा वा बहुनद्यादिजलानां समुदायविवक्षया जलाशय इत्येकत्वव्यपदेशस्तथान्तःकरणोपाधिभेदेन नानात्वेन प्रतीयमानानां जीवगताज्ञानानां समुदायविवक्षयाज्ञानमित्येकत्वव्यपदेश इत्यर्थः । अस्मिन्नर्थे श्रुतिं प्रमाणयति अजामिति । नानाजीवगतनिकृष्टान्तःकरणव्यष्ट्युपाध्यपेक्षया समष्ट्युपाधेरस्य वैलक्षण्यं दर्शयति इयं समष्टिरिति । विगतरागादिदोषसकलकार्यप्रपञ्चस्य जगत्कारणभूतस्याज्ञानस्य समष्टिभूतोत्कृष्टोपाधित्वेन विशुद्धसत्त्वप्राधान्यमिति भावः । एतत्समष्ट्युपाधिद्वारेणेश्वरचैतन्यं लक्षयति एतदुपहितमिति । एतत्समष्ट्यज्ञानोपलक्षितं चैतन्यं सर्वस्य चराचरात्मकप्रपञ्चस्य साक्षित्वेन सर्वज्ञ इत्युच्यते । सर्वेषां जीवानां कर्मानुरूपेप्सितफलदातृत्वेनेश्वर इत्युच्यते । तथा सर्वेषां जीवानामन्तर्हृदये स्थित्वा बुद्धिनियामकत्वेनान्तर्यामीत्युच्यते । सर्वस्य चराचरात्मकप्रपञ्चस्य विवर्ताधिष्ठानत्वेन जगत्कारणत्वमिति व्यपदिश्यत इत्यर्थः । उक्तेऽर्थे युक्तिमाह सकलेति । अत्र प्रमाणमाह यः सर्वज्ञ इति । इदानीं तस्यैवेश्वरस्य समुदायोपाधिरेव कारणशरीरत्वमानन्दमयकोशत्वं सुषुप्त्यवस्थावैशिष्ट्यं च लभत इत्याह ईश्वरस्येति । कारणशरीरत्वे हेतुमाह अखिलेति । आनन्दमयत्वे हेतुमाह आनन्दप्रचुरत्वादिति । कारणत्वावस्थायां प्रकृतिपुरुषमात्रव्यतिरिक्तस्य स्थूलसूक्ष्मकार्यप्रपञ्चस्यैवाभावादानन्दबाहुल्यमिति । कोशत्वे युक्तिमाह आच्छादकत्वादिति । शरीराच्छादकचर्मवदात्माच्छादकत्वादज्ञानस्य कोश इति व्यवहार इत्यर्थः । ननु तथापि कारणत्वोपाधेरज्ञानस्य सुषुप्तित्वं कुत

---

1. *S'vet.* 4. 5. 2. See Notes. 3. °गुणकं सदव्य° DGH. 4. See Notes. 5. *Mund.* 1. 1. 9.

स्थूलसूक्ष्मप्रपञ्चलयस्थानमिति चोच्यते। यथा वनस्य व्यष्ट्यभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशो यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीति तथाज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेश "इन्द्रो मायाभिः पुरुरूप ईयत" इत्यादिश्रुतेः।[1] अत्र व्यस्तसमस्तव्यापित्वेन व्यष्टिसमष्टिताव्यपदेशः। इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना। एतदुपहितं चैत-

इत्यत आह सर्वोपरमत्वादिति। सर्वस्य स्थूलसूक्ष्मोपाधेः कारणोपाधौ लीनत्वात्सुषुप्तित्वमित्यर्थः। ननु स्थूलसूक्ष्मप्रपञ्चलयस्थानस्य कथं सुषुप्तित्वमित्याशङ्क्य संज्ञाभेदो न वस्तुभेद इत्याह अत एव स्थूलेति। यतः कारणत्सुषुप्तित्वमत एव पञ्चीकृतभूतकार्यस्य स्थूलप्रपञ्चस्य जाग्रदवस्थाविशिष्टस्यापञ्चीकृतभूतकार्यस्य सूक्ष्मस्वाप्नप्रपञ्चस्य च लयस्थानमित्यपि व्यवह्रियत इत्यर्थः। समष्टिरूपाज्ञानं सप्रपञ्चं निरूप्येदानीं व्यष्टिभूतमज्ञानं सप्रपञ्चं निरूपयितुं दृष्टान्तौ तावद्दर्शयति यथा वनस्येति। यथा बहुवृक्षसमुदायस्य वनत्वेन रूपेणैकत्वव्यवहारेऽपि प्रत्येकवृक्षविवक्षया चूतादयो बहवो वृक्षास्तिष्ठन्तीति बहुत्वव्यवहारो यथा वा वापीकूपतडागादिषु समुदायविवक्षया जलाशय इत्येकत्वव्यवहारेऽपि प्रत्येकं वाप्यादिविवक्षया बहूनि जलानि तिष्ठन्तीति बहुत्वव्यवहारस्तथा सकलप्रपञ्चकारणस्याज्ञानस्य समुदायरूपैकत्वेऽप्यहङ्कारादिकारणीभूतानां जीवगताज्ञानानां प्रत्येकविवक्षया बहुत्वव्यवहार इत्यर्थः। अस्मिन्नर्थे श्रुतिं प्रमाणयति इन्द्र इति। ननु तथाप्येकत्वाज्ञानस्य तदवच्छिन्नचैतन्यस्य वा व्यष्टिसमष्टिता कुत इत्यत आह अत्र व्यस्तेति। भेदविवक्षया व्यष्टित्वं मृद्घटादिवत्। अभेदविवक्षया च समष्टित्वं मृत्पिण्डवदित्यर्थः। तत्र महाप्रलयकालीनसमष्टिभूतविशुद्धसत्त्वप्रधानाया मूलप्रकृतेः सकाशाद्दैनन्दिनप्रलयकालीनव्यष्ट्युपाधिभूतजीवप्रकृतेर्भेदं दर्शयति इयं व्यष्टिरिति। इयं जीवगता सुषुप्त्यवस्थापन्नाहङ्कारादिविक्षेपसंस्कारादिरूपा निकृष्टोपाधित्वेन मलिनसत्त्वप्रधानेत्यर्थः। अनेनोपाधिना प्राज्ञचैतन्यं लक्षयति एतदुपहितमिति। अत्रोपपत्तिमाह एकाज्ञानेति। ईश्वरगतमूलाज्ञानस्य जीवगताहङ्कारादिविक्षेपसंस्कारादिरूपाज्ञानस्य च वस्तुत एकत्वेन तदवभासकेश्वरजीवचैतन्ययोरप्येकत्वमित्यर्थः। सौषुप्तजीवचैतन्यस्य प्राज्ञत्वं साधयति अस्य प्राज्ञत्वमिति। संस्काररूपास्पष्टोपाधि-

1. *Ṛigveda* 6. 47. 18.

न्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञं इत्युच्यत एकाज्ञानावभासकत्वात्। अस्य प्राज्ञत्वमस्पष्टोपाधितयानतिप्रकाशकत्वात् अस्यापीयमहङ्कारादिकारणत्वात्कारणशरीरमानन्दप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानन्दमयकोशः सर्वोपरमत्वात्सुषुप्तिरत एव स्थूलसूक्ष्मशरीरप्रपञ्चलयस्थानमिति चोच्यते ॥ ७ ॥

तदानीमेतावीश्वरप्राज्ञौ चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभिरानन्दमनुभवत "आनन्दभुक् चेतोमुखः प्राज्ञ" इति

तया तदावृतत्वेनातिप्रकाशकत्वाभावात्प्राज्ञत्वमस्येत्यर्थः। यथा जगत्कारणेश्वरोपाधेः कारणशरीरत्वमानन्दप्रचुरत्वेन चानन्दमयत्वं कोशदृष्टान्तेन च कोशत्वं तथैतत्सर्वं तारतम्येन प्राज्ञचैतन्येऽप्यतिदिशति अहङ्कारादीति। प्रलयकाले हिरण्यगर्भादिप्रपञ्चोत्पादकेश्वरमूलप्रकृतिवत्सुषुप्तिकालेऽहङ्कारादिशरीरोत्पादकसंस्कारमात्रावशिष्टजीवगताज्ञानस्यापि कारणशरीरत्वमिन्द्रियतद्विषयाभावेन व्यासङ्गाभावादानन्दबाहुल्यादानन्दमयत्वमात्माच्छादकत्वात्कोशत्वं च युक्तमिति भावः। ननु स्थूलसूक्ष्मशरीरलयस्थानस्य कथं सुषुप्तिशब्दवाच्यत्वमित्याशङ्क्य पूर्ववत्संज्ञाभेदो न वस्तुभेद इति वक्तुं तत्र युक्तिमाह सर्वोपरमत्वादिति। पञ्चीकृतस्थूलशरीरस्य व्यावहारिकस्यापञ्चीकृतसूक्ष्मशरीरे प्रातिभासिके प्रविलापितत्वात्तस्यापि प्रातिभासिकस्य स्वाप्नप्रपञ्चस्य स्वकारणेऽज्ञाने लीनत्वात्सर्वोपरतिरित्यर्थः। तथा चोक्तम्। "लये फेनस्य तद्धर्मा द्रवाद्याः स्युस्तरङ्गके। तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा। व्यावहारिकजीवस्य लयः स्यात्प्रातिभासिके। तल्लये सच्चिदानन्दाः पर्यवस्यन्ति साक्षिणीति" ॥ ७ ॥

ननु प्रलयकाले सुषुप्तिकाले चान्तःकरणतद्वृत्त्यभावेनानन्दग्राहकाभावादानन्दप्राचुर्यसद्भावे प्रमाणाभावमाशङ्क्य परिहरति तदानीमिति। यथा स्वच्छत्वेनान्तःकरणस्य वृत्तिरङ्गीक्रियते तथा चैतन्यप्रदीप्ताज्ञानस्यापि सूक्ष्मा वृत्तयः स्वीक्रियन्ते। तथा चेश्वरः स्वकीयाज्ञानवृत्तिभिः स्वात्मानन्दबाहुल्यं तारतम्येनानुभवतीति भावः। अत्रैवोपष्टम्भकत्वेन श्रुतिमवतारयति आन-

1. °स्वाद° BCDEFJK. 2. See Notes. 3 Rāmatīrtha reads °प्रचुरत्वादेव.

1. *Vākyasudhā*. 46, 47.

श्रुतेः[1] सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्युत्थितस्य परामर्शोपपत्तेश्च । अनयोः समष्टिव्यष्ट्योर्वनवृक्षयोरिव जलाशयजलयोरिव चाभेदः । एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव जलाशयजलगतप्रतिबिम्बाकाशयोरिव चाभेद "एष सर्वेश्वर" इत्यादिश्रुतेः[2] ॥ ८ ॥

वनवृक्षतदवच्छिन्नाकाशयोर्जलाशयजलतद्गत[3]प्रतिबिम्बाकाशयोर्वाधारभूता[4]नुपहिताकाशवदनयोरज्ञानतदुपहितचैतन्ययोराधारभूतं यदनुपहितं चैतन्यं तत्तुरीयमित्युच्यते "शिवमद्वैतं

न्दभुगिति । उत्तरकालीनसुखपरामर्शो[१]पपत्तिरपि पूर्वानुभूतसुखबाहुल्यानुभवसद्भावे प्रमाणमित्याह सुखमिति । सुखमहमस्वाप्समित्यानन्दपरामर्शः । न किञ्चिदवेदिषमित्यज्ञानपरामर्शः । तथाच सुषुप्तिदशायां प्रलयकाले च प्राज्ञेश्वरावज्ञानवृत्तिभिरानन्दमनुभवत एवेत्यर्थः । इदानीमीश्वरगतमूलाज्ञानस्य जीवगतसंस्कारमात्रावशिष्टाज्ञानस्य च समष्टिव्यष्ट्यभिप्रायेण भेदभानेऽपि वस्तुभेदो नास्तीत्येतत्सदृष्टान्तमाह अनयोरिति । उक्तोपाधिद्वयद्वारेणेश्वरप्राज्ञयोरप्यभेदं दृष्टान्तमुखेन दर्शयति एतदुपहितयोरिति । ईश्वरस्य वनावच्छिन्नाकाशवत्प्राज्ञस्य वृक्षावच्छिन्नाकाशवच्च तथा स्थूलजलाशयोपाध्यवच्छिन्नाकाशवत्तद्गतप्रतिबिम्बाकाशवच्च कारणोपाध्यवच्छिन्नेश्वरस्य कार्योपाध्यवच्छिन्नप्राज्ञस्य च वस्तुतोऽभेद एवेत्यर्थः । तत्र प्रमाणमाह एष इति । तथा चोक्तमाचार्यैः । "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः । कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यत"[२] इति ॥ ८ ॥

उपाधिद्वयावच्छिन्नौ प्राज्ञेश्वरौ सप्रपञ्चं निरूप्येदानीमनवच्छिन्नं तुर्यं चैतन्यं तल्लक्षयति वनवृक्षेति । यथा स्थूलवनोपाध्यवच्छिन्नाकाशापेक्षया सूक्ष्मवृक्षोपाध्यवच्छिन्नाकाशापेक्षया च महाकाशस्य तदुभयाधारतयानवच्छिन्नत्वाच्च तुरीयत्वं तथा कार्यकारणोपाधितदवच्छिन्नचैतन्यद्वयापेक्षया तदाधारभूतं यदनवच्छिन्नं सर्वव्यापि चैतन्यं विशुद्धं तुरीयमुच्यत इत्यर्थः ।

1. *Māṇḍū.* 5. 2. *Māṇḍū.* 6. 3. °जलगत° ABCEFJK. 4. See Notes.

१. So C. only; EFJKL °परामर्शानुप°. २. *Anubhūtiprakāśa* x. 61.

चतुर्थं मन्यन्त" इत्यादिश्रुतेः। इदमेव तुरीयं शुद्धचैतन्यमज्ञानादितदुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं सन्महावाक्यस्य वाच्यं विविक्तं सल्लक्ष्यमिति चोच्यते ॥ ९ ॥

अस्याज्ञानस्यावरणविक्षेपनामकमस्ति शक्तिद्वयम्। आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनायतमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाच्छादयतीव तथाज्ञानं परिच्छिन्नमप्यात्मानमपरिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपिधायकतयाच्छादयतीव तादृशं सामर्थ्यम्। तदुक्तं ॥

---

अस्य चैतन्यस्य तुरीयत्वं वक्ष्यमाणविश्वाद्यपेक्षयेति द्रष्टव्यम्। अस्मिन्नर्थे श्रुतिं संवादयति शिवमिति। आदिपदात् "त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्। तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिव" इत्यादिश्रुत्यन्तरसङ्ग्रहः। एतदेव विशुद्धचैतन्यं तदेव पूर्वोक्तचैतन्यद्वयेन सहैकत्वविवक्षायां महावाक्यस्य वाच्यत्वं लभते भेदविवक्षायां च लक्ष्यत्वं लभत इत्याह इदमेवेति। त्रयाणां चैतन्यानां चैतन्येन रूपेणैकत्वेऽप्यवच्छिन्नानवच्छिन्नत्वेन रूपेण वाच्यलक्ष्यत्वे सम्भवत इत्यर्थः ॥ ९ ॥

[1]अथेदानीं स्वप्रकाशचिद्रूपस्यात्मनः कथं कुण्ठितप्रकाशत्वं कथं वासङ्गोदासीनस्यात्मन आकाशादिप्रपञ्चजनकत्वमित्येतन्महाविरोधपरिहारायाज्ञानस्य शक्तिद्वयं निरूप्यते अस्याज्ञानस्येति। ते एव नामतो निर्दिशति आवरणेति। सच्चिदानन्दस्वरूपमावृणोतीत्यावरणशक्तिः। ब्रह्मादिस्थावरान्तं जगज्जलबुद्बुदवन्नामरूपात्मकं विक्षिपति सृजतीति विक्षेपशक्तिरिति शक्तिद्वयमज्ञानस्येत्यर्थः। नन्वपरिच्छिन्नस्य प्रकाशचिद्रूपाखण्डपरिपूर्णस्वरूपस्यात्मनः परिच्छिन्नेनानित्येन जडतमोरूपेणाव्यापकेनाज्ञानशक्तिविशेषेण कथमावरणमित्याशङ्क्य वस्तुतोऽज्ञानस्यात्माच्छादकत्वाभावेऽपि प्रमातृबुद्धिमात्राच्छादकत्वेनाज्ञानस्यात्माच्छादकत्वमुपचारादुच्यत इत्याह आवरणेति। [2]यथाल्पोऽपि मेघोऽनेकयोजनविस्तीर्णमादित्यमण्डलमवलोकयितृपुरुषदृष्टिमात्रा-

---

1. *Māṇḍū*. 7. 2. See Notes. 3. *Hastāmalaka*, 10.

---

१. This sentence in JK. only. २. This clause in JKL. only. It was probably taken from Rāmatīrtha's commentary. ३. *Kaivalya*. 18.

चैतन्यमपि यथा दीपप्रभादित्यप्रभावभासनासमर्था सर्व तयाभिभूता भवति तथा स्वयम्प्रकाशमानप्रत्यगभिन्नपरब्रह्मा वभासनानर्हतया तेनाभिभूतं सत्स्वोपाधिभूताखण्डवृत्तेर्बाधि तत्वाद्दर्पणाभावे मुखप्रतिबिम्बस्य मुखमात्रत्ववत्प्रत्यगभिन्न परब्रह्ममात्रं भवति ॥ २८ ॥

एवं च सति "मनसैवानुद्रष्टव्यं" "यन्मनसा न मनुते

---

शेनाहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयाखण्डब्रह्मास्मीति चित्तवृत्तिरुदयमासादयति । तदानीमेव तस्याभिव्यक्ताखण्डचैतन्यवहे तस्त्वपरिपीडिताज्ञाननाशो भवति। तदानीं तत्कार्यस्य सर्वस्य नाशादभि व्यक्तिरपि स्वयमेव कतकरजोवद्दारुमथनजनिताग्निवदुदरस्थदुष्टजलशान्त्य पीततप्तजलवच्च नष्टा भवति । तदानीं तद्गताभासोऽपि स्वोपाधिभूतवृत्ति नाशात्स्वप्रकाशात्मावभासनासमर्थतया दर्पणविगमे तदुपाधिकस्य स्वाधि ष्ठानमुखमात्रत्ववदधिष्ठानमात्रो भवतीति वेदान्तसिद्धान्तरहस्यमिति । अत्र तस्यानुभवः । "लोकाश्च भान्ति परमे मयि मोहजन्याः स्वप्नेन्द्रजालमरुवारि समा विचित्राः । व्युत्थानकाल इह न स्युरलं विशुद्धप्रत्यक्सुखाब्धिपरब्रह्म मृतचित्तवृत्तौ ॥ मत्तः परं न खलु विश्वमथापि भाति मध्ये च पूर्णमपि नरश्रृङ्गतुल्यम् । मायोत्थशास्त्रगुरुवाक्यसमुत्थबोधभानुप्रभाविलसिते क्व नु न जाने ॥ निरतिशयसुखाब्धिस्वप्रकाशे परेऽस्मिन्कथमिदमविवेकादुत्थितं स्वप्नफणीव । क्व नु गतमधुना तद्देशिको वा श्रुतिर्वा परमविमलबोधेऽस्मिन्नु स्थितेऽहं न जाने" इति ॥ तदेतत्सर्वं मनसि निधायोपसंहरति प्रत्यग भिन्नेति ॥ २८ ॥

नुनु "मनसैवानुद्रष्टव्यम्" "मनसैवेदमाप्तव्यम्" "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" "बुद्ध्यालोकनसाध्येऽस्मिन्वस्तुन्यवगमो यदि" "बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव" इत्यादिश्रुतिस्मृतिभ्यः "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "यन्मनसा न मनुते

---

1. *Bṛih.* 4. 4. 19. 2. *Kena* 1. 5.

---

१. See जलकतकरेणुन्याय in *Maxims* ii (2nd. edn.) २. Un traceable. ३. So KL; मति EFJ; C. corrupt. ४. *Katha.* 4.11. ५. *Idem.* 3. 12. ६. *Gītā* xviii. 57. ७. *Tait.* 2. 9. 1.

इत्यनयोः श्रुत्योरविरोधो वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् । तदुक्तं ।

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता" इति ॥

"स्वयम्प्रकाशमानत्वान्नाभास उपयुज्यते" इति च ॥ जडपदार्थाकाराकारितचित्तवृत्तेर्विशेषोऽस्ति । तथाहि । अयं घट इति घटाकाराकारितचित्तवृत्तिरज्ञातं घटं विषयीकृत्य

---

"अन्यदेव तद्विदितादथो अविदितादधि" "अविज्ञातं विजानतां विज्ञातमविजानताम्" "अनाशिनोऽप्रमेयस्य" "यद्विज्ञातं त्वया विप्र यत्र विज्ञातमात्मना । ताभ्यामन्यत्परं विप्र विद्धि यद्वेद्यं तज्जडम्" इत्यादिश्रुतिस्मृतीनां च परस्परविरोधमाशङ्क्य परिहरति एवं च सतीति । एवमुक्तप्रकारेणाज्ञातचैतन्यस्य वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वे प्रतिपिद्धे सतीत्यर्थः । तदेवाह वृत्तिव्याप्यत्वेति । अन्तःकरणवृत्तिरावरणनिवृत्त्यर्थमज्ञानावच्छिन्नं चैतन्यं व्याप्नोतीत्येतद्वृत्तिव्याप्यत्वमङ्गीक्रियते । आवरणभङ्गानन्तरं स्वयम्प्रकाशमानं चैतन्यं फलचैतन्यमित्युच्यते तस्मिन्फलचैतन्ये निष्कलङ्के चित्तवृत्तिर्न व्याप्नोत्यावरणभङ्गस्य प्रागेव जातत्वेन प्रयोजनाभावादित्यर्थः । अस्मिन्नर्थे ग्रन्थान्तरं संवादयति तदुक्तमिति । वृत्तिप्रतिबिम्बितचैतन्याभासस्यापि फलचैतन्यप्रकाशकत्वं नेत्यत्रापि सम्मतिमाह स्वयम्प्रकाशेति । इदानीं जडपदार्थविषयकचित्तवृत्तेर्ब्रह्माकारवृत्त्यपेक्षया वैलक्षण्यं दर्शयितुमाह जडपदार्थेति । अहं ब्रह्मास्मीत्यज्ञानावच्छिन्नब्रह्माकारा वृत्तिस्तदावरकमज्ञानमात्रं निवर्तयति ब्रह्म तु स्वप्रकाशात्मत्वात्स्वयमेव प्रकाशते । न तु वृत्तिप्रतिबिम्बितचिदाभासेन चैतन्यं प्रकाश्यते तत्र तस्यासामर्थ्यात् । अयं घट इति घटाकाराकारितचित्तवृत्तिस्तु घटावच्छिन्नचैतन्यावरकाज्ञानं निवर्तयमाना स्वप्रतिबिम्बितचिदाभासेन जडं घटमपि प्रकाशयति । अतस्ततो विशेषोऽस्तीत्यर्थः । एतदेव प्रपञ्चयितुं प्रतिजानीते तथाहीति । जडपदार्थ-

---

1. *Panchadas'i* vii. 90, 92. Line one is the second half of verse 90. There the reading of line three is स्वयंस्फुरणरूपत्वात्.

---

१. *Kena* 3. २. *Idem.* 11. ३. *Gitā* ii. 18. ४. *Vāsiṣṭha-Lainga Upapurāṇa* xi (Kaivalyaratna, p. 101).

तद्गताज्ञाननिरसनपुरःसरं स्वगतचिदाभासेन जडं घटमपि भासयति । तदुक्तं ।

"बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेदिति" ॥

यथा दीपप्रभामण्डलमन्धकारगतं घटपटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरःसरं स्वप्रभया तदपि भासयतीति ॥ २९ ॥

एवंभूतस्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवणमनननिदिध्यासनसमाध्यनुष्ठानस्यापेक्षितत्वात्तेऽपि प्रदर्श्यन्ते । श्रवणं नाम षड्विधलिङ्गैरशेषवेदान्तानामद्वितीयवस्तुनि तात्पर्याव-

---

विषयिणीं चित्तवृत्तिमभिनीय दर्शयति अयमिति । वृत्तिसम्बन्धाभावा-स्याज्ञातत्वादज्ञातं घटं विषयीकृत्य प्रवृत्ता चित्तवृत्तिर्घटगताज्ञानं दूरी-कुर्वाणा घटमपि भासयतीत्यर्थः । अस्मिन्नर्थे वृद्धसम्मतिमाह तदुक्तमिति । बुद्धिश्च तत्र बुद्धौ प्रतिबिम्बितश्चिदाभासश्च बुद्धितत्स्थचिदाभासौ द्वावेतौ बुद्धिचिदाभासौ घटं व्याप्नुतः । तत्र तयोर्मध्ये धिया वृत्त्या घटाज्ञानं नश्येच्चिदाभासेन तु घटः स्फुरेदित्यर्थः । अत्रानुरूपं दृष्टान्तमाह यथा दीपेति । यथान्धकारावस्थितं घटादिकं विषयीकृत्य प्रवर्त्तमानं दीपप्रभा-मण्डलं घटावरकान्धकारनिवृत्तिद्वारा स्वप्रभया घटादिकं प्रकाशयति तद्व-दित्यर्थः ॥ २९ ॥

इयता ग्रन्थजालेन प्रतिपादितस्य प्रत्यगभिन्नपरमानन्दाखण्डचैतन्यस्य साक्षात्कारलक्षणामखण्डाकारान्तःकरणवृत्तिं प्रतिपिपादयिपुस्तत्साधनभूत-श्रवणादेरवश्यानुष्ठेयत्वं तेषां लक्षणानि च क्रमेण दर्शयति एवम्भूतेत्यादिना-द्वैतं वस्तु भासत इत्यन्तेन । एवम्भूतस्योक्तश्रुतियुक्त्यनुभवैर्निरस्तसमस्तोपा-धिप्रत्यगभिन्नपरमानन्दचिद्रूपस्य साक्षात्कारपर्यन्तं श्रवणादीन्यनुष्ठेयानीति प्रतिजानीते तेऽपीति । श्रवणादयोऽपीत्यर्थः । तत्र श्रवणस्य लक्षणमाह षड्विधेति । [1]लीनमर्थं गमयतीति लिङ्गशब्दस्य व्युत्पत्तेर्ब्रह्मात्मैकत्वविषय-यकैरुपक्रमोपसंहारादिषड्विधलिङ्गैः सर्वेषां वेदान्तवाक्यानामद्वितीये ब्रह्मणि

---

1. *Pañchadas'ī* vii. 91. 2. See an amusing passage in *Nyāyamanjarī* p. 527, lines 14 to 25.

---

१. So K. only; लिङ्ग° J; नीत° CEF.

थारणम् । लिङ्गानि तूपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि । प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहारौ । यथा छान्दोग्ये षष्ठाध्याये[1] प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुन "एकमेवाद्वितीयं"[2] इत्यादौ "ऐतदा[3]त्म्यमिदं सर्वं" इत्यन्ते च प्रतिपादनम् । प्रकरणप्रतिपाद्यस्य वस्तु[4]नस्तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः । यथा तत्रैवाद्वितीयवस्तुनि मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनम् । प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तराविषयीकरणमपूर्वता । यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम् । फलं तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र

---

तात्पर्यनिश्चयः श्रवणमित्यर्थः । तानि च लिङ्गानि क्रमेणोद्दिशति उपक्रमेति । तथा चोक्तम् । "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय" इति । उपक्रमोपसंहारौ तावद्दर्शयति प्रकरणप्रतिपाद्यस्येति । तदुदाहृत्य दर्शयति यथेति । एकमेवाद्वितीयमित्युपक्रम्यैतदात्म्यमिदं सर्वमिति प्रतिपादनमुपक्रमोपसंहारावित्यर्थः । अभ्यासस्य लक्षणमाह पौनःपुन्येनेति । अत्रापि श्रुतिमुदाहरति यथेति । अपूर्वत्वस्य लक्षणमाह प्रमाणान्तरेति । "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुतिभिरुपनिषन्मात्रवेद्यत्वप्रतिपादनाद्ब्रह्मणोऽपूर्वत्वमित्यर्थः । अथवा ब्रह्मस्वप्रकाशत्वेन स्वव्यवहारिस्वातिरिक्तप्रमाणानपेक्षत्वाद्ब्रह्मणोऽपूर्वत्वमित्यर्थः । क्रमप्राप्तस्य फलस्य लक्षणमाह फलं त्विति । अत्रानुरूपमुदाहरणमाह आचार्यवानित्यादि । श्रवणादिसाधनानां ब्रह्मात्मैकत्वविज्ञानं प्रयोजनं ब्रह्मज्ञानस्य तु तत्प्राप्तिः फलं "ब्रह्मविद्ब्रह्मैव भवति" "तरति शोकमात्मवित्" इत्यादिश्रुतेरित्यर्थः । पञ्चमलिङ्गस्यार्थवादस्य लक्षणमाह प्रशंसनमिति । प्रकरणप्रतिपाद्याद्वितीयब्रह्मस्वरूपस्तावकवाक्यमर्थवाद इत्यर्थः । अत्रापि

---

1. षष्ठे प्रपाठके DGH. 2. *Chhā.* 6. 2. 1. 3. *Idem.* 6. 8. 7.
4. वस्तुनः in DH. only.

---

१. Quoted in the *Sarvadars'anasamgraha* ( Pūrṇaprajnadars'ana ) and ascribed to the *Brihatsamhitā*. See Notes. २. *Brih.* 3. 9. 26. ३. *Muṇḍ* 3. 2. 9. Here the reading is ब्रह्म वेद. ४. *Chhā.* 7. 1. 3.

तत्र श्रूयमाणं प्रयोजनम् । यथा तत्र "आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य"[1] इत्य- द्वितीयवस्तुज्ञानस्य तत्प्राप्तिः[2] प्रयोजनं श्रूयते । प्रकरणप्रति- पाद्यस्य तत्र तत्र प्रशंसनमर्थवादः । यथा तत्रैव "उत तमादे[3]- शमप्राक्ष्यो[4] येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं"[5] इत्यद्वितीयवस्तुप्रशंसनम् । प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः । यथा तत्र "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इत्यादावद्वितीयवस्तुसाधने विका- रस्य वाचारम्भणमात्रत्वे युक्तिः[6] श्रूयते । मननं तु श्रुतस्या- द्वितीयवस्तुनो वेदान्तानुगुणयुक्तिभिरनवरतमनुचिन्तनम् । [7]विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहो

---

श्रुतिमाह "उत तमादेशं" इत्यादि । "येनाश्रुतं श्रुतं भवति" इति । येन सकलप्रपञ्चाधिष्ठानब्रह्मस्वरूपश्रवणेनाश्रुतं प्रपञ्चजातमपि श्रुतं भवति । येन ब्रह्मज्ञानेनाज्ञातं सर्वं जगज्ज्ञातं भवति । येन ब्रह्मसाक्षात्कारेण साक्षा- त्कृतं भवति ब्रह्मणः सर्वतः सम्प्लुतोदकस्थानीयत्वादित्यर्थः । अवशिष्टस्य उपपत्तेर्लक्षणमाह युक्तिरिति । तामुदाहरति यथेति । मृद्विकारेषु घटादिषु विकारनामधेययोर्वाचारम्भणमात्रत्वेन यथा मृत्त्वमेवावशिष्यते नान्यत्तथा चिद्विवर्तस्य प्रपञ्चस्य गिरिनदीसमुद्रात्मकविकारनामधेययोर्वाचारम्भणमात्र- त्वाच्चिन्मात्रमेवावशिष्यते रज्जुविवर्तस्य सर्पस्य रज्जुमात्रावशेषवदित्यर्थः । श्रवणनिरूपणानन्तरं तदुत्तराङ्गस्य मननस्य लक्षणमाह मननं त्विति । षड्विधलिङ्गतात्पर्यपूर्वकं श्रुतस्याद्वितीयब्रह्मणो वेदान्ताविरोधिनीभिर्युक्ति- भिर्नैरन्तर्येणानुचिन्तनं मननमित्यर्थः । निदिध्यासनलक्षणमाह विजाती- येति । विजातीयदेहादिबुद्ध्यन्तजडपदार्थनिराकरणेन सजातीयाद्वितीयवस्तु- विषयकप्रत्ययप्रवाहीकरणं निदिध्यासनमित्यर्थः । व्युत्थाननिरोधसंस्कारयो- रभिभवप्रादुर्भावे सति चित्तस्यैकाग्रतापरिणामः समाधिः । स च द्विविधः

---

1. *Chhā.* 6. 14. 2. 2. HK. omit *visarga*. 3. *Idem.* 6. 1. 3. 4. °प्राक्षो CBGL. 5. *Idem.* 6. 1. 4. 6. BCDGHL insert उप- पत्तिः here. 7. See Notes.

निदिध्यासनम् । समाधिर्द्विविधः सविकल्पको निर्विकल्पकश्चेति । तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्प[1]लयानपेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम् । तदा मृन्मयगजादिभानेऽपि मृद्भानवद्द्वैतभानेऽप्यद्वैतं वस्तु भासते । तदुक्तं[2] ।

---

इत्याह सविकल्पको निर्विकल्पकश्च । तस्य लक्षणमाह तत्रेति । तत्र तयोः सविकल्पकनिर्विकल्पकयोर्मध्ये सविकल्पकोऽपि द्विविधः । अहं ब्रह्मास्मीति शब्दानुविद्धतयाद्वितीये वस्तुनि चित्तवृत्तेरवस्थानमित्येकः । द्वितीयस्तु ज्ञातृज्ञानज्ञेयत्रिपुटीविलयानपेक्षयाहं ब्रह्मास्मीति शब्दानुविद्धतयाद्वितीये वस्तुन्यविच्छेदेन चित्तवृत्तेरवस्थानमित्यर्थः । ननु[1] "भक्षितेऽपि लशुने न शान्तो व्याधिः" इतिन्यायेनोक्तसविकल्पकसमाध्योः सकलभेदनिराकरणाय प्रवर्तनात्तयोरपि ज्ञात्रादिभेदविषयत्वेन नाद्वैतवस्तुमात्रभानं तत्रेत्याशङ्कोत्तरमाह तदेति । तदा सविकल्पकसमाध्यनुभवकाले ज्ञात्रादिभेदप्रतीतावप्यद्वैतं वस्तु भासत एव । सुवर्णमयकुण्डलादिभाने सुवर्णभानवन्मृन्मयगजादिभाने मृद्भानवच्च गजादिभानस्य वाचारम्भणमात्रत्ववज्ज्ञात्रादिभानस्यापि वाचारम्भणमात्रत्वादद्वैतमेव वस्तु भासत इत्यर्थः । यद्वा सर्वं खल्विदं ब्रह्मैतदात्म्यमिदं सर्वमित्यादिश्रुतिबलात्सर्पमहमिति गिरिनदीसमुद्रात्मकं सर्वं जगत्स्वाभिन्नसच्चिदानन्दब्रह्मत्वेनानुभूय तस्य दग्धपटन्यायेन[2] प्रपञ्चभानेऽप्यद्वैतं सच्चिदानन्दलक्षणं वस्तु भासत एवेत्यर्थः । तदुक्तं [3]भगवता । "वासुदेवः सर्वमिति स महात्मा सुदुर्लभ" इति । मूलकारोऽप्यस्मिन्नर्थे ग्रन्थान्तरसम्मतिं दर्शयति तदुक्तमिति । ओमिति यत्परं ब्रह्म तदेवाहमित्यन्वयः । किं तदित्याह दृशिस्वरूपमिति । दृशिर्दृष्टिस्तस्या रूपं दृष्टत्वं तद्यस्य परमात्मस्वरूपस्य तद्दृशिस्वरूपं साक्षिस्वरूपमित्यर्थः । तदुक्तं[4] भगवता । "उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः । परमात्मेति

---

1. ABDHK. insert भेद after विकल्प. 2 *Upades'asāhasrī.* 73 ( x. I. ). The reading of the editions, तदुक्तमभियुक्तैः has no support from my Mss. Rāmatīrtha explains तदुक्तमभिनीय which is also the reading of D.

---

१. See *Maxims* i ( 2nd. edn. ). २. Ditto. ३. *Gitā* vii. 19. ४. *Idem.* xiii. 22.

"दृशिस्वरूपं गगनोपमं परं
सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं
तदेव चाहं सततं विमुक्तमोमिति" ॥

निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पलयापेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानम् ।

चाप्युक्तो देहेऽस्मिन्पुरुषः पर" इति । पुनः किंरूपं तत् । गगनोपमम् । गगनमुपमा दृष्टान्तो यस्य तद्गगनोपमं गगनवन्निर्लेपस्वरूपमित्यर्थः । तथा च भगवद्वचनम् । "यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यत" इति । यद्वा गगनोपमं गगनवत्सूक्ष्मस्वरूपमित्यर्थः । "आकाशशरीरं ब्रह्म" इति श्रुतेः । पुनः किंभूतम् । सकृद्विभातम् । सकृदेकदैव विभातं सर्वदैकस्वरूपेण भासमानं चन्द्रादिप्रकाशवन्न वृद्धिक्षयशीलमित्यर्थः । पुनः किंरूपम् । अजं जन्मरहितम् । एकं निरस्तसर्वोपाधिभेदम् । अक्षरं विनाशधर्मराहित्येन कूटस्थस्वरूपमित्यर्थः । तथा च भगवानाह । "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत" इति । अलेपकमसङ्गत्वादविद्यादिदोषरहितमित्यर्थः । "असङ्गो ह्ययं पुरुष" इति श्रुतेः । सर्वगतं सर्वत्र ब्रह्मादिस्थावरान्तेषु भूतेषु गतं व्याप्तम् । अद्वयं सजातीयविजातीयभेदराहित्येन द्वितीयरहितम् । सततं विमुक्तमिति सर्वकार्यकारणात्मकसर्वोपाधिविनिर्मुक्तत्वेन सततैकरूपमित्यर्थः । तथा च भागवते । "बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुत" इति । तथा चैतादृशं निरतिशयानन्दं यत्परं ब्रह्म तदेवाहमिति भावयतो निषेधप्रतियोगित्वेन तत्तदुपाधिभानात्तत्प्रयुक्तभेदभानेऽप्यद्वैतं भासत एवेत्यर्थः । निर्विकल्पकसमाधिस्वरूपमाह निर्विकल्पकस्त्विति । अयं च द्विविधः । चिरकालाभ्यस्तयदुत्तरसविकल्पकसमाध्यनुभवजनितसंस्कारसहकृतायाश्चित्तवृत्तेर्ज्ञात्रादित्रिपुटीलयपूर्वकमद्वैते वस्तुन्येकभावनात्मकः प्रथमः । एतादृ

1. विमुक्तः EFGHJK. but see commentary. Rāmatīrtha explains विमुक्तः । 2. BCDH. insert here भेद and G. विभेद

१. *Gītā* xiii. 32. २. *Tait.* 1. 6. 2. ३. *Gītā* xv. 16. ४. *Bṛh.* 4. 3. 15. ५. *Bhāg. Purāṇa* 11. 11. 1. ६. तदुत्तर K; पटुतर FJ.

तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवदद्वितीयवस्त्वाकाराकारितचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रमवभासते । ततश्चास्य सुषुप्तेश्चाभेदशङ्का न भवति । उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेणानयोर्भेदोपपत्तेः ॥ ३० ॥

अस्याङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः । तत्र "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" । "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" । कर-

---

विकल्पकसमाध्यभ्यासपाटवेन लुप्तसंस्कारतया ज्ञात्रादित्रिपुटीलयपूर्वकमखण्डाकाराकारितायाश्चित्तवृत्तेर्विनापि स्वस्फूर्तिं केवलचिदानन्दात्मनावस्थानात्मको द्वितीयः । तत्र द्वितीयं पक्षमभिप्रेत्याह ज्ञातृज्ञानादीति । नन्वेवं समाधिसुषुप्त्योर्विक्षेपाभावेन वृत्त्यभानादभेदमाशङ्क्य परिहरति ततश्चेति । तत्र युक्तिमाह उभयत्रेति । समाधिसुषुप्त्योरित्यर्थः । तत्सद्भावेति । समाधावज्ञायमानवृत्तिसद्भावात्सुषुप्तौ वृत्त्यभावाच्च तयोर्भेदोपपत्तेरित्यर्थः ॥ ३० ॥

उक्तसमाधेः साधनापेक्षायामाह अस्याङ्गानीति । तानि च साधनानि क्रमेणोद्दिशति यमेति । यमाद्यष्टाङ्गानि समाधेरन्तरङ्गसाधनानीत्यर्थः । प्रथमं यमस्य लक्षणमाह तत्रेति । तेषु यमाद्यष्टाङ्गेषु मध्येऽहिंसादयः पञ्च यमा अवश्यानुष्ठेया इत्यर्थः । तदनन्तरं नियमानाह शौचेति । शौचादयः पञ्च नियमा इत्यर्थः । आसनं लक्षयति करेति । प्राणायामलक्षणमाह रेचकेति । "इडया पूरयेद्वायुं मुञ्चेद्दक्षिणयानिलम् । यावच्छ्वासं समासीनः कुम्भयेत्तं सुषुम्णया" । यदा योगी पद्मासन उपविश्य योगमभ्यसति तदा गुल्फाभ्यां गुदमूलं निष्पीड्य खेचरीमुद्रासाहाय्येन प्राणधारणया सुषुम्णामार्गेण मूलाधारात्कुण्डलिनीमुत्थाप्य स्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञानिर्वाणाख्यषट्चक्रभेदक्रमेण सहस्रदलकमलकर्णिकायां विद्यमानपरमात्मना सह संयोज्य तत्रैव चित्तं निर्वातदीपवदचलं कृत्वा स्वात्मानन्दरसं पिबतीत्येतत्प्राणायामफलम् । स च द्विविधोऽगर्भः सगर्भश्चेति । "मुञ्चेद्दक्षिणया वायुं मात्राहीनमनन्यधीः । पूरयेद्वामया तद्वत्कुम्भयेच्च

---

1. As to *Samādhi* being ancillary to itself, see Trans. of *Sarvadarśana:*, p. 243. 2. *Yogasūtra* ii. 30. 3. *Idem.* ii. 32.

---

१. See Notes. २. Ditto. ३. Ditto.

चरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीन्यासनानि। रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः।

सुषुम्णया । यावच्छ्वासं जितश्वासो भवेन्मासाज्जितेन्द्रिय" इति प्रणवो-
च्चाररहित्येनोक्तरेचकपूरककुम्भकक्रमेण प्राणनिरोधोऽगर्भप्राणायामः ।
"रेचयेत्षोडशेनैव तद्द्विगुण्येन पूरयेत् । कुम्भयेच्च चतुःषष्ट्या प्रणवार्थ-
मनुस्मरन्" इति वचनात्षोडशप्रणवं मनसा जपन्दक्षिणया वायुं विरेच्य
द्वात्रिंशत्संख्याकं प्रणवं मनसा समुच्चरन्वामया वायुमापूर्य चतुःषष्टिसंख्याकं
प्रणवं मनसा जपंस्तदर्थं चाकारोकारमकारार्धमात्रात्मकसार्धत्रिवलयाकारं
कुण्डलिनीरूपं चिदानन्दकन्दं च मूलादिब्रह्मरन्ध्रान्तमनुसन्दधत्सुषुम्णया
चित्तमपि तदेकप्रवणं कुर्वन्यावच्छ्वासं कुम्भयेत् । तदुक्तमाचार्यैः । "षोडश-
तद्द्विगुणचतुःषष्टिमात्राणि च तानि च क्रमशः । रेचकपूरककुम्भकभेदैस्त्रि-
विधः प्रभञ्जनायाम" इति प्राणायामप्रकारः । क्रमप्राप्तं प्रत्याहारं निरू-
पयति इन्द्रियाणामिति । श्रोत्रादीनामिन्द्रियाणां स्वस्वविषयेभ्यः शब्दा-
दिभ्यः सकाशात्पाषाणोपरिप्रयुक्तः शरसंघातस्तद्वत्प्रत्यावर्तनं प्रत्याहारः ।
ननु इन्द्रियाणां स्वस्वविषयेभ्यो निवर्तनं प्रत्याहार इत्युक्तं तन्न सम्भवति
शब्दादिविषयाणां सुखसाधनत्वेन वैषयिकसुखव्यतिरिक्तनिरतिशयानन्द-
सद्भावे प्रमाणाभावाद्धिरण्यगर्भाद्यमृतभोगस्येश्वरेणापि त्यक्तुमशक्यत्वादिति
चेन्न मूढैः कर्मजडैर्विषयलम्पटैस्त्यक्तुमशक्यत्वेऽपि शुद्धान्तःकरणेन संसा-
राविद्यकत्वदर्शिना विषयदोषदर्शनेन तुच्छीकृतशब्दादिविषयप्रपञ्चेन पुरुषो-
त्तमेन त्यक्तुं शक्यत्वात् । अन्यथा संसार एव लोलुप्येत । "तेषां न्यासमेव
तपसामतिरिक्तमाहुः" "एतमेव लोकमीप्सन्तः प्रव्राजिनः प्रव्रजन्ति"
"एतत्सर्वं भूःस्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत्" "त्यागेनैके अमृत-
त्वमानशुः" "ब्रह्मचर्यादेव प्रव्रजेत्" "यदहरेव विरजेत्तदहरेव प्रव्रजेद्-
नाद्गृहाद्वा" "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" "संसारमेव निःसारं
दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः । प्रवृत्ति-
र्विदिषासिद्धौ वेदानुवचनादयः । ब्रह्मावाप्त्यै श्रुतत्यागमीप्सन्तीति श्रुतेर्बलात्"
इत्यादिश्रुतिस्मृतिभिस्तथा "आनन्दो ब्रह्मेति व्यजानात्" "एतस्यैवानन्दस्य-

1. पद्मक all but DEK.

१. *Mahānār.* 24. 1. २. *Brih.* 4. 4. 22 (Mādhyandina). ३. *Jā-
bāla.* 6. ४. *Mahānār.* 10. 5. ५. *Jābāla.* 4. ६. *Idem.* ७. *Gī.*
xviii. 66. ८. See Notes. ९. *Tait.* 3. 6. 1. १०. *Brih.* 4. 3. 32.

इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः । अद्वितीयवस्तुन्यन्तरिन्द्रियधारणं धारणा । तत्राद्वितीयवस्तुनि विच्छिद्य विच्छिद्यान्तरिन्द्रियवृत्तिप्रवाहो ध्यानम् । समाधिस्तूक्तः सविकल्पक एव ॥ ३१ ॥

एवमस्याङ्गिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारो विघ्नाः सम्भवन्ति । लयस्तावदखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा । अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं विक्षेपः । लयविक्षेपाभावेऽपि चित्तवृत्ते

न्यानि भूतानि मात्रामुपजीवन्ति"[१] "एषोऽस्य परमानन्दः"[२] "आत्मैवानन्दः" "यदेष आकाश आनन्दो न स्यात्"[३] "आनन्दाद्ध्येव खल्विमानि भूतानि"[४] इत्यादिश्रुतिभिश्च नित्यात्मसुखस्य प्रतिपादितत्वाच्छब्दादिवैषयिकसुखव्यतिरिक्तनिरतिशयानन्दसद्भावे प्रमाणाभावादित्येतदपि निरस्तं बोद्धव्यम् । सम्प्रति धारणां लक्षयति अद्वितीयेति । सर्वेषां बुद्धिसाक्षितया विद्यमानेऽद्वितीयवस्तुनि चित्तनिक्षेपणं धारणेत्यर्थः । धारणापाटवाभावेन चित्तस्थैर्याभावात् । अद्वितीयवस्तुनि विच्छिद्य विच्छिद्य चित्तवृत्तिप्रवाहीकरणं ध्यानमित्याह तत्राद्वितीयेति । समाधिरुक्त एव सविकल्पकः स्मर्तव्य इत्याह समाधिस्त्विति ॥ ३१ ॥

उक्तयमाद्यष्टाङ्गसहितनिर्विकल्पकसमाधेर्निर्विघ्नानुष्ठानसिद्ध्यर्थं विघ्नज्ञानव्यतिरेकेण निवारणस्य कर्तुमशक्यत्वादस्य चतुरो विघ्नान्दर्शयति एवमस्येति । तत्राद्यं विघ्नं लक्षयति लय इति । लयो द्विविधः । चिरकालमुक्ताष्टाङ्गसहितनिर्विकल्पकसमाध्यभ्यासपाटवेनातितप्तलोहतलक्षिप्तजलबिन्दुवत्तैलरहितदीपकलिकावच्च प्रत्यगभिन्ने परमानन्दे चित्तवृत्तेर्लयः प्रथमः । द्वितीयस्तु मूर्च्छावस्थावदालस्येन चित्तवृत्तेर्बाह्यशब्दादिविषयग्रहणादरे सति प्रत्यगात्मस्वरूपानवभासनाद्वृत्तेः स्तब्धीभावलक्षणनिद्रारूपः । तत्राद्यमङ्गीकृत्य द्वितीयस्य विघ्नत्वेन तत्त्यागाय तत्स्वरूपमाह अखण्डेति । द्वितीयं विघ्नमाह अखण्डेति । अखण्डवस्तुग्रहणायान्तर्मुखतया प्रवृत्तायाश्चित्तवृत्तेश्चिदनवलम्बनेन ग्रस-

1. ABCEK. omit वृत्ति.

१. *Brih.* 4. 3. 32. २. Cf. *Tait.* 2. 5. 1. ३. *Idem.* 2. 7. 1. ४. *Idem.* 3. 6. 1. ५. See Notes.

रागादिवासनया स्तब्धीभावादखण्डवस्त्वनवलम्बनं कषाय
अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पकानन्दास्वा
दनं रसास्वादः। समाध्यारम्भसमये सविकल्पकानन्दास्वाद
वा ॥ ३२ ॥

अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वातदीपवदच
सदखण्डचैतन्यमात्रमवतिष्ठते यदा तदा निर्विकल्पकः समाधि
रित्युच्यते। तदुक्तं।

---

पक्षिवत्पुनर्बाह्यविषयग्रहणाय प्रवृत्तिर्विक्षेप इत्यर्थः। तृतीयं विघ्नमाह स्त
विक्षेपेति। रागादयस्त्रिविधा बाह्या आभ्यन्तरा वासनामात्ररूपाश्चेति
बाह्याः पुत्रादिविषयाः। आभ्यन्तरा मनोराज्यादयः। संस्काररूपा वासना
मयाः। तत्रानेकजन्माभ्यस्तबाह्याभ्यन्तररागाद्यनुभवजनितसंस्कारैः कलु
कृतं चित्तं कथञ्चिच्छ्रवणादिसाधनेनान्तर्मुखमपि चैतन्यग्रहणसामर्थ्याभा
न्मध्य एव स्तब्धीभवति। यथा राजदर्शनाय स्वगृहान्निर्गत्य राजमन्दि
प्रविष्टस्य कस्यचित्पुरुषस्य द्वारपालनिरोधेन स्तब्धीभावस्तथा परित्यक्त
विषयस्याखण्डवस्तुग्रहणाय प्रवृत्तस्योद्बुद्धरागादिसंस्कारैः स्तब्धीभावादख
वस्त्वग्रहणं कषाय इत्यर्थः। चतुर्थं विघ्नमाह अखण्डेति। उक्तसविकल्प
समाध्योर्मध्ये द्वितीयः शब्दानुविद्धत्रिपुटीविशिष्टस्तस्मिन्य आनन्दो भ
शब्दादिविषयप्रपञ्चभारत्यागप्रयुक्तो न तु चैतन्यप्रयुक्तः। यथा निधिग्र
णाय प्रवृत्तस्य निधिपरिपालकभूतप्रेताद्यावृत्तस्य निधिप्राप्त्यभावेऽपि भूताद्य
निष्टनिवृत्तिमात्रेण कोऽपि महानानन्दो भवति तथा सविकल्पकसमाधेर
खण्डवस्त्वनवलम्बनेन नित्यानन्दरसास्वादनाभावेऽप्यनिष्टबाह्यप्रपञ्चनिवृत्ति
जन्यानन्दं सविकल्पकरूपं ब्रह्मानन्दभ्रमेणास्वादयति तद्रसास्वादनमित्यर्थः।
लक्षणान्तरमाह समाध्यारम्भेति। निर्विकल्पकसमाध्यारम्भकालेऽनुभूयमान
सविकल्पकानन्दत्यागासहिष्णुतया पुनस्तस्यैवास्वादनं रसास्वाद इत्यर्थः॥३२॥

प्रोक्तविघ्नचतुष्टयनिवृत्तेः फलमाह अनेनेति। लयादिविघ्नाभावसहि
चित्तं यदा निर्वातदीपवदचलमखण्डचैतन्यमात्रमवतिष्ठते तदा निर्विकल्पक
समाधिरित्यर्थः। लयादिविघ्नसद्भावे तन्निवृत्तिप्रकारे च वृद्धसम्मतिमा

---

1. °लम्बनेऽपि GHL. 2. Gauḍapāda's *Kārikās* iii. 44, 45.

---

१. °श्यो CEFJL. २. So CEF. and margin of J; शब्दाद्य° KL.

"लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयाच्छमप्राप्तं न चालयेत् ॥
नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेदिति"

तदुक्तमिति । पूर्वोक्तनिद्रालक्षणे लये जाते सति तन्निवृत्त्यर्थं चित्तं सम्बोधयेच्चित्तगतजाड्यादिपरित्यागेन चित्तमुद्बोधयेत् । उक्तविक्षेपयुक्तं चित्तं यदा भवति तदा विषयवैराग्यादिना चित्तं शमयेद्बहिर्मुखतां परित्यज्यान्तर्मुखं कुर्यात् । उक्तरागादिकषायसहितं चित्तं यदा भवेत्तदा विजानीयादियं रागादिवासना बाह्यविषयप्रापिका न स्वखण्डवस्तुप्रापिकातो नेयं समीचीनेति विविच्य प्रत्यक्प्रवणवासनायाः सकाशादियं निकृष्टातस्त्याज्येयमिति जानीयादित्यर्थः । यद्वा सम्यग्वस्तुन्यप्राप्तं चित्तं यदा भवति तदा तच्चित्तं कषायसहितं जानीयात् । तच्चित्तं यावता कालेन रागादिवासनाक्षयसहितं भवति तावत्कालं तच्चित्तं स्वस्थानान्न चालयेदिति न कम्पयेत् । वासनाक्षयानन्तरं चित्तं स्वत एव प्रत्यक्प्रवणं भवतीत्यर्थः । नास्वादयेदिति पूर्वोक्तं सविकल्पकरसं विषयप्रपञ्चभारत्यागजन्यं नास्वादयेन्नानुभवेत् । तत्र युक्तिमाह निःसङ्ग इति । यतो निःसङ्गो वैषयिकसुखदुःखादिसङ्गरहितोऽतः प्रज्ञया युक्तो भवेत्स्थिरप्रज्ञो भवेदित्यर्थः । तदुक्तं भगवता । "प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् । आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यत" इति । तस्माल्लयादिविघ्नाभावविशिष्टचित्तस्य चिन्मात्रतयावस्थानं निर्विकल्पकसमाधिरित्यर्थः । तत्र भगवानाह यथा दीप इति ॥

अथ निर्विकल्पकसमाधौ स्वगुरूपदिष्टमार्गेण यथामति किञ्चिद्विचार्यते । पञ्चभूमिकोपेतस्य चित्तस्य भूमिकात्रयपरित्यागेनावशिष्टभूमिकाद्वयं समाधिरित्युच्यते । कास्ताः पञ्चभूमिकाः । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धं चेति पञ्च चित्तभूमिकाः । तत्रासुरसम्पल्लोकशास्त्रदेहवासनासु वर्तमानं क्षिप्तमित्युच्यते । निद्रातन्द्रादिग्रस्तं चित्तं मूढमित्युच्यते । कादाचित्कध्यानयुक्तं बहिर्गमनशीलमप्युक्तक्षिप्ताद्विशिष्टतया विक्षिप्तं चित्तमित्युच्यते । तत्र क्षिप्तमूढयोः समाधित्वशङ्कैव नास्ति । विक्षिप्ते तु चेतसि विक्षेपान्तर्गततया दहनान्तर्गतबीजवच्चित्तस्य सद्य एव विनाशात्तदापि न समाधिः । एकाग्रतां पैतञ्जलिः सूत्रयति "शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणाम" इति । अस्यार्थः । शान्तोऽतीतः । उदितो वर्तमानः । प्रत्यय-

१ *Gitā* ii. 55. २. See Bhojadeva on *Yogasūtra* i. 2.
३. *Yogasūtra* iii. 12.

"यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृतेति" च ॥ ३३ ॥

श्चित्तवृत्तिः । अतीतप्रत्ययो यं पदार्थं परिगृह्णात्युदितोऽपि तमेव चेद्गृह्णीयात्तदा तावुभौ तुल्यप्रत्ययौ भवतः । तादृश एव चित्तस्य परिणाम एकाग्रतेत्युच्यते । एकाग्रताभिवृद्धिलक्षणं समाधिं सूत्रयति "सर्वार्थैकाग्रतयोः क्षयोदयौ चित्तस्य परिणामः समाधिः" इति । रजोगुणेन चाल्यमानं चित्तं क्रमेण सर्वार्थान्पदार्थान्परिगृह्णाति तत्र रजोगुणस्य निरोधाय क्रियमाणेन प्रयत्नविशेषेण दिने दिने योगिनः सर्वार्थता क्षीयत एकाग्रता चोदेति तादृशश्चित्तस्य परिणामः समाधिरित्यर्थः । अस्य समाधेरष्टाङ्गेषु यमनियमासनप्राणायामप्रत्याहाराः पञ्च बहिरङ्गानि हिंसादिभ्यो निषिद्धेभ्यो योगिनं कर्मभ्यो यमयन्ति निवर्तयन्तीत्यहिंसादयो यमः । जन्महेतून् काम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामधर्मे नियमयन्ति प्रेरयन्तीति शौचादयो नियमाः । यमनियमयोरनुष्ठानवैलक्षण्यं स्मर्यते । "यमान्सेवेत सततं न नित्यं नियमान्बुधः । यमान्पतत्यकुर्वाणो नियमान् केवलान् भजन्" इति । बुद्ध्या यमनियमौ समीक्ष्य यमबहुलेषु प्रयत्नेषु बुद्धिमनुसन्दधीत । आसनप्राणायामप्रतिहारा व्याख्याताः । ध्यानधारणासमाधित्रयं मनोविषयत्वात्सम्यक्प्रज्ञातसमाधेरन्तरङ्गं यमादिकं तु बहिरङ्गम् । तथा च केनापि पुण्येनान्तरङ्गे प्रथमं लब्धे सति बहिरङ्गलाभाय नातिप्रयासः कर्तव्यः । यद्यपि पतञ्जलिना भौतिकभूततन्मात्रेन्द्रियाहङ्कारविषयाः सम्प्रज्ञातसमाधयो बहुधा प्रपञ्चितास्तथापि तेषामन्तर्धानाकाशगमनादिसिद्धिहेतुतया मुक्तिहेतुसमाधिविरोधित्वान्नास्माभिस्तत्रादरः क्रियते । तथा चोक्तं वासिष्ठे । "श्रीराम उवाच । जीवन्मुक्तशरीराणां कथमात्मविदां वर । शक्तयो नेह दृश्यन्त आकाशगमनादिकाः । श्रीवसिष्ठ उवाच । अनात्मविदमुक्तोऽपि सिद्धिजालानि वाञ्छति । द्रव्यमन्त्रक्रियाकालयुक्त्याप्नोत्येव राघव । नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्मनात्मदृक् । आत्मनात्मनि सन्तुष्टो नाविद्यामनुधावति । ये केचन जगद्भावास्तानविद्यामयान्विदुः । कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति । द्रव्यमन्त्रक्रियाकालयुक्तयः साधुसिद्धिदाः । परमात्मपदप्राप्तौ नोपकुर्वन्ति काञ्चन" इति । आत्मविषयस्तु सम्प्रज्ञात-

1. *Gītā* vi. 19.

१. *Yogasūtra* iii. 11. There the reading is समाधिपरिणाम-
२. JK. omit पदार्थान्. ३. निषेधेभ्यः Mss. ४. *Manu* iv. 204.
५. CJ. read. °दसम्प्र° ६ *Yogavāsiṣṭha* 5. 89. 9, 12, 13, 14
31, with modifications.

अथ जीवन्मुक्तलक्षणमुच्यते। जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृतेऽज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठः।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" ॥

इत्यादिश्रुतेः[1] ॥ ३४ ॥

---

समाधिर्वासनाक्षयस्य निरोधसमाधेश्च हेतुस्तस्मात्तत्रादरः कृतः। अथ पञ्चभूमिकारूपश्चित्तस्य निरोधलक्षणः समाधिर्निरूप्यते। तं च समाधिं सूत्रयति "व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणाम" इति। व्युत्थानसंस्काराः समाधिविरोधिनस्ते च निषिद्धहेतुना योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणं चाभिभूयन्ते तद्विरोधिनश्च संस्काराः प्रादुर्भवन्ति। तथा सति निरोध एकैकस्मिन् क्षणे चित्तमनुगच्छति सोऽयमीदृशश्चित्तस्य परिणामो भवति यदा तदासम्प्रज्ञातसमाधिरुच्यत इत्यर्थः ॥ ३३ ॥

एतत्समाधिद्वयं जीवन्मुक्तस्यैव सम्भवति नान्यस्येति मनसि निधाय प्रथमं जीवन्मुक्तस्वरूपं प्रतिपादयितुं प्रतिजानीते अथेति। तस्य लक्षणमाह जीवन्मुक्तो नामेत्यादिना ब्रह्मनिष्ठ इत्यन्तेन। अत्राखिलबन्धरहितो ब्रह्मनिष्ठो जीवन्मुक्त इति तस्य लक्षणम्। जीवतः पुरुषस्य हि कर्तृत्वभोक्तृत्वसुखदुःखलक्षणोऽखिलो यश्चित्तधर्मः स क्लेशरूपत्वाद्बन्धो भवति तेन रहितः परित्यक्तबन्धनो ब्रह्मणि निष्ठा तदेकपरता यस्य स ब्रह्मनिष्ठो जीवन्मुक्त इत्यर्थः। सकलबन्धराहित्ये हेतुमाह स्वस्वरूपेति। गुरुश्रुतिस्वानुभवैर्ब्रह्मात्मैकत्वविज्ञानेन मूलाज्ञानतत्कार्यसञ्चितकर्मादीनामपि बाधितत्वात्सर्वबन्धराहित्यमुपपद्यते। तथा च श्रुतिः भिद्यत इति ॥ ३४ ॥

---

1. L. and Rāmatīrtha insert सति. 2. See Notes. 3. *Muṇḍ.* 2. 2. 8. Rāmatīrtha reads °श्रुतेश्च।

---

१. °तत्रा° J, °त्तत्राना° L. २. *Yogasūtra* iii. 9. The reading there is as above, with which K. agrees. All the other Mss. and the Calcutta edition, read निरोधलक्षण° and निरोधः परिणामः.
३. योगीन्द्रयत्नेन J.

अयं तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादिभाजनेन शरीरेणान्ध्यमान्द्यापटुत्वादिभाजनेनेन्द्रियग्रामेणाशनापिपासाशोकमोहादिभाजनेनान्तःकरणेन च पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धारब्धफलानि च पश्यन्नपि बाधितत्वात्परमार्थतो न पश्यति । यथेन्द्रजालमिति ज्ञानवांस्तदिन्द्रजालं पश्यन्नपि परमार्थमिदमिति न पश्यति । "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव" इत्यादिश्रुतेः । उक्तं च ।

"सुषुप्तवज्जाग्रति यो न पश्यति
द्वयं च पश्यन्नपि चाद्वयत्वतः ।
तथा च कुर्वन्नपि निष्क्रियश्च यः
स आत्मविन्नान्य इतीह निश्चय" इति ॥ ३५ ॥

नन्वेतादृशस्य जीवन्मुक्तस्य देहेन्द्रियादिभानमस्ति न वेत्याशङ्क्य द्वंद्व-पटन्यायेनेन्द्रजालनिर्मितसौधसमुद्रादिवच्च बाधितानुवृत्त्या मिथ्यात्वेन भानेऽपि परमार्थतया भानं नेत्याह अयमित्यादिना न पश्यतीत्यन्तेन । अस्मिन् श्रुतिमाह सचक्षुरिति । आचार्यवचनं प्रमाणयति उक्तंचेति । इह जगति स एवात्मविन्नान्य इति मे निश्चय इत्यन्वयः । स क इत्यपेक्षायामाह य इति । यः कोऽपि महापुरुषो ब्रह्मात्मैकत्वसाक्षात्कारेण निरस्तसमस्तभेद-बुद्धिः सुषुप्तावस्थायां यथा द्वैतं न पश्यति तथा ब्रह्मदृष्टिदार्ढ्येन जाग्रदवस्थायामपि द्वैतं न पश्यति तद्दृष्ट्या ब्रह्मव्यतिरिक्तजडपदार्थाभावात् स तथोक्तः । किञ्च कदाचिद्व्युत्थानदशायामाविद्यकसंस्कारलेशवशात्क्षुधादि-दिव्यवहारेण द्वयं पश्यन्नपि समाध्यभ्याससामर्थ्यवशादद्वयत्वेन पश्यति स च तथोक्तः । यश्च लोकसङ्ग्रहार्थं नित्यादिकर्माणि कुर्वन्नप्यात्मनि कर्तृत्वाभावनिश्चयेन निष्क्रियः कर्मरहितो भवति कर्मफलेन न लिप्यते स जीवन्मुक्तो नात्र संशयः कर्तव्य इत्यर्थः ॥ ३५ ॥

1. So HKL: the rest मौग्ध्य. 2. °द्वान्या° D. only.
3. *Upades'asāhasrī* 85 ( x. 13 ).

अस्य ज्ञानात्पूर्वं विद्यमानानामेवाहारविहारादीनामनुवृत्ति-वच्छुभवासनानामेवानुवृत्तिर्भवति शुभाशुभयोरौदासीन्यं वा। तदुक्तं ।

"[1]बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षण" इति ॥

"[2]ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतर" इति ॥ ३६ ॥

---

नन्वस्य जीवन्मुक्तस्य योगीश्वरस्य मम पुण्यपापलेपो नास्तीत्यभिमान-वशाद्यथेष्टाचरणप्रसङ्गमाशङ्क्य परिहरति अस्य ज्ञानादिति । अस्य पूर्वोक्त-जीवन्मुक्तस्य ज्ञानात्प्रागेव शान्त्यादिगुणैरशुभवासनाया निवारितत्वात्संसार-दशायामप्रयत्नेनाहारादिप्रवृत्तिवत्तत्त्वज्ञानोत्तरमपि शुभानामेव वासनाना-मनुवृत्तिर्भवति नाशुभानामित्यर्थः । ननु शुभवासनानुवृत्तेरपि प्रयोजना-भावात्किं तदनुवृत्त्येत्यत आह शुभाशुभयोरिति । तस्माज्जीवन्मुक्तस्य यथेष्टाचरणप्रसङ्गो नास्तीति भावः । अस्मिन्नर्थे ग्रन्थान्तरं संवादयति तदुक्तमिति । जीवन्मुक्तस्य ब्रह्मज्ञानित्वाभिमानो नास्तीत्यत्रापि सम्मतिमाह ब्रह्मवित्त्वमिति । ननु विदुषां यथेष्टाचरणप्रसङ्गो नास्तीत्युक्तं तदनुपपन्नं "न[1](?) मातृवधेन न पितृवधेन" "[3]यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते" "[4]हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि । परमार्थविन्न पुण्यैर्न च पापैर्लिप्यते मनुजः" "[5]अश्वमेध-सहस्राणि ब्रह्महत्याशतानि च । कुर्वन्नपि न लिप्येत यद्येकत्वं प्रपश्यति" "[6]सभयादभयं प्राप्तस्तदर्थं यतते च यः । स पुनः सभयं गन्तुं स्वतन्त्रश्चेन्न हीच्छति" "[7]आरब्धकर्मनानात्वाद्बुद्धानामन्यथान्यथा । वर्तनं तेन शास्त्रार्थे

---

1. *Naishkarmyasiddhi*. iv. 62. 2. *Upades'asāhasrī*. 115 (xii 13.). Rāmatirtha ignores this line altogether. Apart from its own context, it would be difficult to say what the true reading of the second and third words is. ABCEFKL. have यथा, and the rest तथा, A. has मुक्ता, BDG. मुक्तः, C. मुक्तो, EFHK. मुक्त्वा, J. मुक्तं. B. reads ब्रह्मवित्तु. See Notes.

---

१. न CFJ. २. *Kaush*. 3. 1. ३. *Gītā* xviii. 17. ४. *Paramārthasāra*, 78. ५. *Sūta Samhitā* (Ānandās'rama Series), p. 918. ६. *Upades'asāhasrī*. 640. (xviii. 228.) ७. *Pañchadas'ī*. vi. 287.

तदानीममानित्वादीनि ज्ञानसाधनान्यद्वेष्टृत्वादयः सद्गुणाश्चालङ्कारवदनुवर्त्तन्ते । तदुक्तं ।

"उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिण" इति ॥ ३७ ॥

किंबहुनायं देहयात्रामात्रार्थमिच्छानिच्छापरेच्छाप्रापि

---

विश्रान्तव्यं न पण्डितैः" इत्यादिश्रुतिस्मृत्यभियुक्तवाक्यैर्विदुषां यथेष्टाचरणत्वाङ्गीकारादिति चेत्सत्यं तेषां वचनानां विद्वत्स्तुतिपरत्वेन तत्कर्तव्यमित्यत्र तात्पर्याभावात् । तदुक्तमाचार्यैः । "अधर्माज्जायतेऽज्ञानं यथेष्टाचरणं ततः । धर्मकार्ये कथं तत्स्याद्यत्र धर्मो विनश्यति" इति ॥ ३६ ॥

नन्वेवं "अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवं" इत्यादिस्मृत्युक्तसाधनस्य "अद्वेष्टा सर्वभूतानां" इत्यादिवचनैः प्रतिपाद्यमानाद्वेष्टृत्वादिगुणसमूहस्य विदुषां सम्पाद्यमानत्वश्रवणात्तेन सह विरोधमाशङ्क्यामानित्वादिसम्पादनस्य च विविदिषासंन्यासविषयत्वाद्विदुषां तु लक्षणत्वेनालङ्कारवदनुवर्तनान्न विरोध इत्याह तदानीमिति । जीवन्मुक्तावस्थायामित्यर्थः । अस्मिन्नर्थे वार्तिकसम्मतिमाह तदुक्तमिति । अस्य विद्वत्संन्यासिनो जीवन्मुक्तस्याद्वेष्टृत्वादयो गुणा अप्रयत्नेन स्वत एव भवन्ति न तु साधनरूपिणः प्रति ते साधनरूपा न भवन्ति । तत्र हेतुमाह उत्पन्नेति । यत उत्पन्न आत्मावबोधो ब्रह्मात्मैकत्वनिश्चयरूपस्ततस्तस्य ते गुणा लक्षणत्वेनैव भवन्तीत्यन्वयः ॥ ३७ ॥

इयता प्रबन्धेन प्रतिपादितेऽस्मिन्वेदान्तसाराख्ये ग्रन्थे श्रीमत्परमगुरुपरमहंसपरिव्राजकाचार्यसदानन्दयोगीन्द्रेण महापुरुषेणाथ वेदान्तो नामेत्यारभ्य साधनचतुष्टयसम्पन्नस्य प्रमातुरधिकारिणो मूलाज्ञाननिवृत्तिपरमानन्दप्राप्तिसिद्ध्ये प्रतीयमानाविद्यकसकलप्रपञ्चजातस्य ब्रह्मण्यध्यारोपापवादपुरःसरं सविस्तरं निष्प्रपञ्चत्वं प्रतिपाद्य तत्साधनं च श्रवणादिकं सम्यगभिधाय तस्यैवाधिकारिणस्तत्त्वमस्यादिवाक्यश्रवणानन्तरं ब्रह्मात्मैकत्वसाक्षात्कारेण निरस्तसमस्तभेदबुद्धेर्जीवन्मुक्तत्वं प्रदर्शितम् । एतावतैव कार्यसिद्धेः

---

1. *Naishkarmyasiddhi* iv. 69.

---

१. *Naishkarmyasiddhi* iv. 63. The reading there is प्रतिधर्मोऽपि नेष्यते. २. *Gitā* xiii. 7. ३. *Idem.* xii. 13. ४. प्रति CEFJL; प्रतियोगेन K. ५. That is, his guru's guru.

**तानि सुखदुःखलक्षणान्यारब्धफलान्यनुभवन्नन्तःकरणाभासादीनामवभासकः संस्तदवसाने प्रत्यगानन्दपरब्रह्मणि प्राणे**

---

किं बहुलेखेनेति मनसि निधाय सम्प्रत्यस्यैव जीवन्मुक्तस्य स्वप्रकाशात्मानन्दानुभवैकनिष्ठस्य भेदप्रतीत्यभावेऽप्यविद्यालेशवशात्प्रारब्धं कर्म भुञ्जानो भिक्षाटनादिदेहयात्रामात्रक्रियाविशिष्टो ब्रह्मीभूत एवावतिष्ठत इत्युपसंहरति किं बहुनेत्यादिना। प्रारब्धं त्रिविधम्। स्वेच्छाकृतं भिक्षाटनादि। समाध्यवस्थायां शिष्यादिभिर्दीयमानमन्नादिकं परेच्छाकृतम्। समाध्यवस्थायां व्युत्थानदशायां वाकाशफलपातवदकस्माज्जायमानं पाषाणपतनकण्टकवेधादिकमनिच्छाकृतम्। स चायं जीवन्मुक्तः प्रोक्तत्रिविधप्रारब्धप्रापितं सुखदुःखमनुभवन्बुद्ध्यादिसाक्षितया सर्वावभासकः सन्भोगेनारब्धकर्मक्षये सति प्रत्यगभिन्नपरमात्मनि प्राणादिलयानन्तरं प्रनष्टाविद्यकसंसारः कृतकृत्यः सन् गलितसकलभेदप्रतिभासो ब्रह्मैवावतिष्ठत इति सकलवेदरहस्यतात्पर्यमित्यर्थः। अयं जीवन्मुक्तो बुद्ध्याद्युपाधिविलये सति घटाद्युपाधिविनिर्मुक्ताकाशवन्मुक्त इत्युपचारव्यवहारभाग्भवति बद्धत्वस्याप्यवास्तवत्वात्। तदुक्तमाचार्यैः। "न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः। न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता"। अस्य जीवन्मुक्तस्योपाधिविगमसमये प्राणाख्यं लिङ्गशरीरमतितप्तलोहक्षिप्तनीरबिन्दुवत्प्रत्यगभिन्नपरमानन्दे लीनं स्यात्स्थूलशरीरं नोत्तिष्ठतीति। अत्र श्रुतिमाह न तस्येति। अयं जीवन्मुक्तो जीवन्नेव दृश्यमानाद्रागद्वेषादिबन्धनाद्विशेषेण मुक्तः सन् वर्तमानदेहपाते सति भाविदेहबन्धाद्विशेषेण मुच्यत इत्यत्रापि श्रुतिमाह विमुक्तश्चेति। बृहदारण्यकेऽपि। "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत" इति। वासिष्ठेऽपि "जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते। भवत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव" इति। "असङ्गो ह्ययं पुरुषः" "आकाशवत्सर्वगतश्च नित्यः" अँज्ञाविरं शुद्धमपा-

---

१. ॰क्रियावशिष्टः CFJK. २. Gauḍapāda ii. 32. See Notes. ३. *Bṛih.* 4. 4. 7. ४. *Yogavāsishṭha* 3. 9. 14 (modified) ५. *Bṛih.* 4. 3. 15. ६. In the bhāshya on *Chhāndogya* 6. 3. 2, this is ascribed to the *Kāṭhaka*. It is not in the *Kaṭhopanishad*, however, or in *Tait. Brāh.* iii. 10—12, which Bhāskaramis'ra calls *Kāṭhaka* (See Burnell's Tanjore Catalogue, P. 7*b*.). I have not had access to a Ms. of the Saṃhitā. ७. *Is'ā*. 8.

लीने सत्यज्ञानतत्कार्यसंस्काराणामपि विनाशात्परमकैवल्य-मानन्दैकरसमखिलभेदप्रतिभासरहितमखण्डब्रह्मावतिष्ठते। "न तस्य प्राणा उत्क्रामन्ति" "अत्रैव समवलीयन्ते" "विमुक्तश्च

पविद्धं" इत्यादिश्रुत्या प्रत्यगात्मनो नित्यत्वपरिपूर्णत्वकूटस्थत्वश्रवणादुत्पत्त्याप्तिविकृतिसंस्कारचतुर्विधक्रियाफलविलक्षणत्वेन विद्यया नित्यनिवृत्ताविद्यानिवृत्तिमात्रेण प्राप्त एवात्मा पुनः प्राप्त इत्युपचर्येत। अधिष्ठानस्य गमनाभावेऽध्यस्तस्य लोकान्तरगमनायोगान्न सालोक्यादिमुक्तिसम्भवः। नन्वप्राप्तस्य क्रियासाध्यस्य वस्तुनो विद्यमानानर्थनिवृत्तेश्च पुरुषार्थत्वं दृष्टमत्र तदभावात्कथं पुरुषार्थत्वमिति चेन्न तयोरेव पुरुषार्थत्वमिति नियमाभावात्स्वच्छायायामारोपितरक्षसो विस्मृतकण्ठगतचामीकरस्य भ्रान्तपुरुषस्याप्तवाक्येन तयोर्निवृत्त्याप्त्योरपि पुरुषार्थत्वदृष्टेः। अत्र सङ्ग्रहः। "आत्माज्ञानमलं निरस्तममलं प्राप्तं च तत्त्वं परं कण्ठस्थाभरणादिवद्भ्रमवशाच्छायापिशाची यथा। आप्तोक्त्याप्तिनिवृत्तिवच्छ्रुतिशिरोवाक्याद्गुरोरुत्थिताद्ध्वस्तध्वान्तनिरासतः परं सुखं प्राप्तं तयोरुच्यत" इति। न च मुक्तानामपि वसिष्ठभीष्मप्रभृतीनामपरोक्षज्ञानिनां पुनर्देहान्तरश्रवणात्केवलज्ञानोत्पत्तिसमय एवाल्पज्ञानामस्माकं मुक्तिर्भवतीति कथं विश्वसिमोऽतो ज्ञानव्यतिरिक्तमप्युपायान्तरं किञ्चित्कर्तव्यमिति वाच्यं शास्त्रप्रामाण्यादेव तदुपपत्तेः। "ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मवित्" इत्यादिश्रुतिभिर्ज्ञानोत्पत्तिसमयमेव मुक्तिप्रतिपादनात्। तदुक्तं शेषेण। "तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम्। ज्ञानसमकाले मुक्तः कैवल्यं याति हतशोक" इति। वसिष्ठादीनां स्वाधिकारिकपुरुषत्वेन यावदधिकारं प्रारब्धवेगप्रयुक्तशापादिना स्वीकृतावान्तरदेहपातेऽपि तद्देहभाविभोगस्य निवारयितुमशक्यत्वात्प्रारब्धस्य विना भोगेन क्षयानुपपत्तेः। "यावदधिकारमवस्थितिरधिकारिणां" इति भगवद्व्यासैर्विशेषितत्वात्। अस्मदादीनां च प्रारब्धकर्मणोऽनेकदेहारम्भकत्वसम्भवेऽपि चरमदेहं विनापरोक्षज्ञानोत्पत्तेरसम्भवात्। वामदेवे तथा दृष्टत्वात्। अन्यथा गर्भस्थस्य श्रवणाद्यभावेन ज्ञानोत्पत्त्यनुपपत्तेः। ननु ज्ञानिनामपि स्वप्नावस्थायां देहान्तरस्वीकारान्मुक्तानामपि पुनर्देहान्तरस्वीकारः किं न

1. *Brih.* 4. 4. 6. 2. *Idem.* 3. 2. 11. There, however, the reading is समवनीयन्ते.

१. See *Maxims* ii ( 2nd. edn. ). २. *Paramārthasāra* 82. ३. *Brahmasūtra* 3. 3. 32. ४. *Ait. Up.* 4. 5.

विमुच्यत" इत्यादिश्रुतेः ॥ ३८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यसदानन्द-
विरचितो वेदान्तसारः समाप्तः ॥

स्यादिति चेन्न कण्ठे स्वप्नं समाविशदित्यादिवाक्येषु कण्ठान्निर्गमनाभावश्रवणात् । देहान्तरप्राप्तिस्तु तदन्तरप्रतिपत्ताविलत्र देहान्निर्गमनश्रवणादुपस्यम् । तदुक्तं स्कान्दे । "यस्मिन्देहे दृढं ज्ञानमपरोक्षं विजायते । तद्देहपातपर्यन्तमेव संसारदर्शनम् । पुरापि नास्ति संसारदर्शनं परमार्थतः । कथं तद्दर्शनं देहविनाशादूर्ध्वमुच्यते । तस्माद्ब्रह्मात्मविज्ञानं दृढं चरमविग्रहे । जायते मुक्तिदं ज्ञानं प्रसादादेव मुच्यत" इति । तस्मात्सुष्ठूक्तं विमुक्तश्च विमुच्यत इति ॥ ३८ ॥

नित्यशुद्धपरिपूर्णमद्वयं सच्चिदात्मकमखण्डमक्षरम् ।
सर्वदासुखमबोधतत्कृतैर्वर्जितं सदहमस्मि तत्परम् ॥
गोवर्द्धनप्रेरणया विमुक्तक्षेत्रे पवित्रे नरसिंहयोगी ।
वेदान्तसारस्य चकार टीकां सुबोधिनीं विश्वपतेः पुरस्तात् ॥

जाते पञ्चशताधिके दशशते संवत्सराणां पुनः
सञ्जाते दशवत्सरे प्रभुवरश्रीशालिवाहे शके ।
प्राप्ते दुर्मुखवत्सरे शुभशुचौ मासेऽनुमत्यां तिथौ
प्राप्ते भार्गववासरे नरहरिष्टीकां चकारोज्वलाम् ॥

इति श्रीमत्परमहंसपरिव्राजकार्यश्रीमत्कृष्णानन्दभगवत्पूज्यपादशिष्यनृसिंहसरस्वतीकृता सुबोधिन्याख्या वेदान्तसारटीका समाप्ता ॥

1. *Katha* 5. 1.

१. So L; CFJK. स्वप्ने. २. तदनन्तर J; तदनन्तरं KL. ३. *Sūta-Saṃhitā* 3. 7. 76–8 (pp. 306–7).

# विद्वन्मनोरञ्जनी

ॐ सकलब्रह्मविद्यासम्प्रदायप्रवर्तकाचार्येभ्यो नमः ॥

सत्यं ज्ञानमनन्तं परिपूर्णानन्दविग्रहं रामम् ।
प्रत्यञ्चमनृतविश्वसृष्टिस्थितिलयप्ययं वन्दे ॥ १ ॥
वाणीकायमनोभिः श्रीगुरुविद्यागुरून्नमस्कृत्य ।
वेदान्तसारटीकां कुर्वे श्रद्धावशाद्यथाबुद्धि ॥ २ ॥

चिकीर्षितस्य ग्रन्थस्याविघ्नपरिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनफलं विशिष्टशिष्टाचारानुमितस्मृतिपरिकल्पितश्रुतिबोधितकर्तव्यताकं स्वाभिमतदेवतातत्त्वानुसन्धानात्मकं मङ्गलमाचरत्यखण्डेत्यादिश्लोकेन । आत्मानमाश्रय इत्यन्वयः । यद्यपि ग्रन्थकरणादिकार्यारम्भे गणेशसरस्वत्यादिदेवताभेदं विघ्नविघातविद्यास्फूर्तिप्रदत्वेन प्रसिद्धमनुसन्धानं कुर्वन्ति शिष्टास्तथापि "एष उ ह्येव सर्वे देवा" इति श्रुतेरात्मन एव सर्वदेवतात्मकत्वावगमादात्मानुसन्धाने सति सर्वदेवतानुसन्धानं सम्भवतीति मन्यते ग्रन्थकारः । आत्मानं विशुद्धचिद्रूपं त्वम्पदलक्ष्यं तुरीयमाश्रये शास्त्राचार्यप्रसादाभिव्यक्तमनुसन्दधे । अस्यात्मनस्तत्पदलक्ष्यपरमात्मानन्यत्वं वाक्यार्थं कथयितुं तत्पदार्थं शोधयति अखण्डसच्चिदानन्दं इति । "आनन्दादयः प्रधानस्य" इतिन्यायेन "सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इति श्रुत्योः परस्परैकवाक्यतामभिप्रेत्याखण्डेत्यादिभिरानन्दपदस्य समासः । अखण्डशब्दोऽनन्तपदपर्यायः । स चाविद्याभ्यस्तदेशकालवस्तुभ्यः परमात्मनः परिच्छेदं व्यावर्तयत्येव नञ्पदयोगात् । तदुक्तम् ।

"तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम्" इति ।

इतराणि तु पदानि स्वार्थापरित्यागेनैव स्वविरोध्यर्थव्यावृत्तं ब्रह्म लक्षयन्ति । तदुक्तम् ।

"स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणम्" इति ।

परिशिष्टौ सत्यज्ञानशब्दावित्यर्थः । अखण्डमपि तदनृतं शून्यं वा स्यादित्यत आह सत् इति । सदनृतशून्यव्यावृत्तं बाधाभावोपलक्षितस्वरूपसत्ता-

---

१. *Brih.* 1. 4. 6. २. *Brahmasūtra* 3. 3. 11. ३. *Tait.* 2. 1. 1.
४. *Brih.* 3. 9. 28. ५. Sures'vara's *Taittiriyavārtika* ii. 78.
६. *Idem* ii. 79 ( page 57 ).

त्मकमिति यावत् । ब्रह्मणोऽप्यनृतत्वे निरधिष्ठानारोपप्रसङ्गात् । शून्यस्य ससाक्षिकत्वे तु सर्वशून्यवादानुपपत्तेरसाक्षिकत्वे तदसिद्धेः स्वप्रकाशत्वे ब्रह्मण एव नामान्तरत्वापत्तेर्न ब्रह्मानृतं शून्यं वेत्यर्थः । अखण्डं सदपि तत्तमोवज्जडं किं न स्यादित्यत आह चित् इति । चिज्ज्ञानं ज्ञप्तिरिति पर्यायः । श्रुतौ ज्ञानं ब्रह्मेति सामानाधिकरण्याद्गुणत्वे तस्य तदनुपपत्तेः । न च शुक्लो घट इतिवत्तत्स्यादिति वाच्यं निर्धर्मकत्वप्रतिपादकास्थूलादिश्रुति-विरोधात् । किञ्च ज्ञानस्य नित्यत्वेऽग्न्युष्णवत्सवितृप्रकाशवच्च ब्रह्मस्वभावाव्यतिरेकात् । अनागमापायिधर्मस्य धर्मिणः परमार्थतो भिन्नत्वे प्रमाणाभावात् अनित्यत्वे ज्ञानानवस्थाप्रसङ्गात् । कार्यस्य सतो ज्ञानस्यापि कार्यान्तरवत्स्वोपादानगोचरापरोक्षज्ञानजन्यत्वात् । ज्ञानोपादानब्रह्मगोचरस्यापि ज्ञानस्य कार्यत्वे तस्यापि पूर्वसमानयोगक्षेमतया कथं नानवस्था । अजन्यत्वे प्रथमे कः प्रद्वेषः । तथा च सिद्धा ब्रह्मणो ज्ञानस्वभावतैतेन जीवात्मनोऽपि ज्ञानस्वभावता व्याख्याता वेदितव्या । स्वप्रकाशं चैतद्ब्रह्मदृष्टव्यमप्रकाशजड-विलक्षणत्वनिर्देशसामर्थ्यात् । "तदेव ज्योतिषां ज्योतिः" "तस्य भासा सर्वमिदं विभाति" इत्यादिश्रुतेः । नन्वेवमखण्डसच्चिद्रूपमपि ब्रह्म न प्रेक्षा-वत्प्रेप्सागोचरं सुखदुःखाभावतत्साधनानामन्यतमत्वाभावात् । न तावत् सुखदुःखाभावसाधनं ब्रह्म स्वस्मिन्सुखदुःखयोर्नित्यनिवृत्तत्वात् "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति श्रुतेः । नाप्यन्यगतसुखादिसाधनं ब्रह्म । अन्येषां दृष्टादृष्टसुखदुःखप्राप्तिपरिहारयोर्लौकिकवैदिकसाधनेभ्य एव सिद्धेः । तस्मान्न सुखादिसाधनं ब्रह्म । नापि दुःखाभावरूपं भावात्मस्वभावताविरोधात् । नापि सुखात्मकं तथात्वे प्रमाणाभावादित्यत आह आनन्द इति । आनन्दं सुखरूपम् । न च ब्रह्मण आनन्दात्मत्वे प्रमाणाभावः "विज्ञानमानन्दं ब्रह्म" "आनन्दो ब्रह्मेति व्यजानात्" "आनन्दरूपममृतं यद्विभाति" "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" इत्यादिश्रुतेः प्रमाणत्वात् । न चानन्दब्रह्मणोर्धर्मधर्मिताशङ्काप्यवकाशं लभते श्रुतिस्वारस्यभङ्गप्रसङ्गात् । न च ब्रह्मण ईश्वरस्य सुखित्वं परैरपीष्यतेऽ-

१. *Tait.* 2. 1. 1. २. *Brih.* 3. 8. 8. ३. See Notes. ४. *Brih.* 4. 4. 16. ५. *Katha* 5. 15. ६. MNR. omit प्रेक्षावत्. ७. *Chh.* 8. 12. 1. ८. P. wrongly reads and translates अनानन्द. ९. आनन्दत्वे MP. १०. *Brih.* 3. 9. 28. ११. *Tait.* 3. 6. 1. १२. *Mund.* 2. 2. 7. १३. *Tait.* 2. 7. 1. १४. स्वदन्यताग्निकैरित्यर्थः । सुखित्वाङ्गीकारे तत्साधककर्माङ्गीकारोऽप्यस्तु । इष्टापत्तौ तु कर्मसाध्यदुःखापादानं दुर्वारमेवेति भावः ॥ M ( margin ).

आनन्दो विद्यतेऽस्मिन्नित्यानन्दं ब्रह्मेति परेषां श्रुतिव्याख्यानमुपहासास्पदमेव। न च ब्रह्मण्यानन्दशब्दो दुःखाभावपरः "आनन्दो ब्रह्मेति व्यजानात्" इति भावरूपब्रह्मसामानाधिकरण्यनिर्देशविरोधात्। न च प्रियास्पर्शित्वश्रुतिविरोधस्तस्याः श्रुतेर्वैषयिकप्रीतिनिषेधपरत्वादिति भावः। यद्यप्यात्मपदमेवेह शेषिपदं तथापि श्रुत्युपरोधात्पदार्थशोधनार्थतया च ब्रह्मपदमध्याहृत्य विशेष्यं बोद्धव्यम्। एवं सत्यखण्डं सच्चिदानन्दं ब्रह्मात्मानमाश्रय इति ब्रह्मात्मपदयोः सामानाधिकरण्येन तत्त्वम्पदार्थयोरैक्यवाक्यार्थोऽब्रह्मत्वपारोक्ष्यनिवृत्त्या परिपूर्णतया निरूपितः स्यान्नान्यथा। एतेषां च पदानां ब्रह्मपदेन प्रत्येकं प्रथममन्वितानां पश्चात्सामानाधिकरण्येन परस्परमपि सम्बन्धसिद्धिः। "अरुणया पिङ्गाक्ष्या गवैकहायन्या सोमं क्रीणाति" इत्यत्र क्रयवाचिपदान्वितानामरुणादिपदानामिव परस्परान्वयः। न चैकार्थत्वे सत्यादिपदानां पर्यायतापत्तिर्यौगपद्यं चेति वाच्यं प्रवृत्तिनिमित्तभेदाद्व्यावर्त्यभेदाच्चोक्तदोषानवतारात्। एवमन्योऽपि वाक्यविचारोपयोगी न्याय ऊहनीयो विस्तरभयान्नेह लिख्यते। एवं विधिमुखेन परिच्छिन्नानृतजडदुःखरूपानात्मतद्धर्मविलक्षणं ब्रह्मेति निरूप्येदानीं "नेति नेति" "अस्थूलं" "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतिमाश्रित्य निषेधमुखेन सकलनिषेधावधिभूतं सत्यस्य सत्यं ब्रह्मेति दर्शयति अवाङ्मनसगोचरं इति। वाक्च मनश्च वाङ्मनसे तयोर्गोचरो वाङ्मनसगोचरो न वाङ्मनसगोचरोऽवाङ्मनसगोचरस्तदिति विग्रहः। "नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा" "अस्तीत्येवोपलब्धव्य" इति च काठकश्रुतेः। एवं विधिनिषेधाभ्यां ब्रह्मणः स्वरूपलक्षणमभिधाय लक्षितं स्वरूपं तटस्थलक्षणेन सम्भावयति अखिलाधारं इति। अखिलस्याकाशादिप्रपञ्चस्याधार आश्रयस्तदिति विग्रहः। आश्रयशब्दः सृष्टिप्रलययोरप्युपलक्षणार्थः। तथा च श्रुतिः। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति" इति। ततश्च जगदुत्पत्तिस्थितिलयकारणं ब्रह्मेत्युक्तं भवति। अत इदं फलितम्। सत्यज्ञानानन्तानन्दैकरसं ब्रह्म तत्पदलक्ष्यमिति। आत्मपदादेव त्वम्पदार्थशुद्धिः। "आत्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति" इति श्रुतावात्मशब्दस्य निर्विशेषप्रत्यक्चैतन्यमात्रनिष्ठतया निर्धारितत्वात्। तथा च ब्रह्मात्मपदयोः सामानाधिकरण्यादैक्यवाक्यार्थसि-

---

१. *Tait.* 3. 6. 1. २. *Chhā.* 8. 12. 1. ३. *Tait-saṁhitā* 6. 1. 6. 7; 7. 1. 6. 2. See Notes. ४. *Bṛih.* 2. 3. 6. ५. *Idem* 3. 8. 8. ६. *Tait.* 2. 4. 1. ७. *Kaṭha.* 6. 12. ८. *Idem* 6. 13. ९. *Tait.* 3. 1. 1. १०. *Bṛih.* 1. 4. 7.

द्भिरित्युक्तं तदेव वाक्यार्थभूतमात्मानमाश्रये । किमर्थम् । अभीष्टसिद्धये। अभीष्टं शास्त्रार्थाप्रतिपत्त्यन्यथाप्रतिपत्तिविप्रतिपत्तिनिरासलक्षणं यथाशास्त्रमर्थसङ्ग्रहसामर्थ्यलक्षणं च । तस्य सिद्धिः सम्पत्तिस्तस्यै तदर्थमित्यर्थः ॥ १ ॥

एवं शास्त्रप्रतिपाद्यपरदेवतातत्त्वानुस्मरणलक्षणं मङ्गलं विधायेदानीं "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ" इत्यादिशास्त्राद्देवताभक्तिवद्गुरुभक्तेरपि विद्याङ्गत्वप्रतीतेः "देवमिवाचार्यमुपासीत" इत्यादिस्मृतेश्च गुर्वाराधनोक्तिपूर्वकं स्वचिकीर्षितं प्रतिजानीते अर्थत इति श्लोकेन । वेदान्तो वक्ष्यमाणलक्षणस्तस्य सारो मथितार्थस्तं वक्ष्ये । तच्च यथामति स्वमत्यनुसारेण । अनन्तशाखाप्रविततस्यातिगम्भीरार्थस्य वेदान्तस्यार्वाग्बुद्धिभिरपरिच्छेदात् । तदुक्तमभियुक्तैः ।

"गुरुचरणसरोजसन्निधाना-
दपि वयमस्य गुणैकलेशभाजः ।
अपि महति जलार्णवे निमग्नाः
सलिलमुपाददते मितं हि मीनाः" इति ॥

एतच्च गर्वपरिहारोक्तिवचनं न पुनर्वादिभयनिमित्तं यथाशास्त्रमर्थसङ्ग्रहादित्यर्थः । किंकृत्वा । गुरूनाराध्य । भक्तिश्रद्धातिशयस्तुतिनमस्कारादिना देवमिव पूजयित्वा । गुरूनित्येकस्मिन्बहुवचनं पूजार्थम् । किंनामानो गुरव इत्यपेक्षायां स्वस्य साम्प्रदायिकत्वज्ञापनाय तान्नामतो निर्दिशति अद्वयानन्दानिति । नाम्नो डित्थादिवत्संज्ञामात्रत्वं व्यावर्तयति अर्थत इति । अपिशब्दः शब्दार्थयोः समुच्चयार्थः । न केवलं शब्दतः किन्त्वर्थतोऽपीति । तत्र हेतुः अतीतद्वैतभानत इति । अतीतं द्वैतं यस्मात्तदतीतद्वैतं प्रत्यगात्मतत्त्वं तस्य भानं साक्षात्कारस्तस्मादतीतद्वैतभानतः । अतीतद्वैतभावत इति पाठे तत्त्वज्ञानविध्वस्तनिखिलभेदब्रह्मात्मत्वादित्यर्थः ॥ ३ ॥

ब्रह्मात्मप्रतिपत्तिपरेषु श्रुतिसूत्रेषु विद्वद्भिर्मितनिबन्धेषु चाविशेषेण वेदान्तशब्दस्य लोके प्रयोगदर्शनात्सर्वत्र मुख्यवृत्तितः प्रतीतिं वारयन्मुख्यगौणभेदेन वेदान्तशब्दं व्युत्पादयति वेदान्तो नाम इत्यादिना । उपनिषच्छब्दो ब्रह्मात्मैक्यसाक्षात्कारविषयः । उपनिपूर्वस्य क्विप्प्रत्ययान्तस्य षद्लृ विशरणगत्यवसादनेष्वित्यस्य धातोरुपनिषदिति रूपम् । तत्रोपशब्दः सामीप्यमाचष्टे तच्च सङ्कोचकाभावात्सर्वान्तरे प्रत्यगात्मनि पर्यवस्यति । निशब्दो निश्चयवचनः । सोऽपि तत्तत्त्वमेव निश्चिनोति तदैकत्व्यवाच्युपशब्दसामा-

१. P. wrongly, शास्त्रार्थप्र°. २. S'vet. 6. 23. ३. Āpastamba Sūtra 1. 6. 13 ...

धिकरण्यात् । तस्माद्ब्रह्मविद्या स्वसंशीलिनां संसारसारतामर्तिं सादयति विपादयति शिथिलयतीति वा परमश्रेयोरूपं प्रत्यगात्मानं सादयति गमयतीति वा दुःखजन्मप्रवृत्त्यादिमूलाज्ञानं सादयत्युन्मूलयतीति वोपनिषत्पदवाच्या । सैव प्रमाणम् । तस्याः प्रमारूपायाः करणभूतः सर्वशाखासूत्तरभागेषु पठ्यमानो ग्रन्थराशिरप्युपचारात्प्रमाणमित्युच्यते । तथा चोपनिषदः प्रमाणं प्रमाकरणमुपनिषत्प्रमाणं वेदान्त इत्यर्थः । तदुपकारीणि वेदान्तार्थविचारानुकूलानीति यावत् । तदनुकूलत्वं वेदान्तवाक्यप्रमेयासम्भावनापोहद्वारा न तु प्रमित्युत्पत्तौ तत्फले वा साक्षाद्विचारशास्त्रस्याङ्गभावस्तथा सति वेदान्तवाक्यानां सापेक्षताप्रसङ्गात् । तदुक्तमभियुक्तैः

"स्वाध्यायवन्न करणं घटते विचारो
नाप्यङ्गमस्य परमात्मधियः प्रसूतौ ।
सापेक्षतापतति वेदगिरस्तथात्वे
प्रत्यात्मनः प्रमितिजन्मनि तन्न युक्तम्" इति ॥[1]

शरीरमेव शरीरकं तत्रभवो जीवः शारीरकः स सूच्यते याथातथ्येन निरूप्यते यैस्तानि शारीरकसूत्राणि "अथातो ब्रह्मजिज्ञासा"[2] इत्यादीनि । यद्वा शारीरकस्य सूत्राणि तद्याथात्म्यवादिवेदान्तार्थसङ्ग्रहवाक्यानि । आदिशब्दो भाष्यादिसङ्ग्रहार्थः । चशब्दो वेदान्तशब्दानुषङ्गार्थः । तथा च वेदानामन्तोऽवसानभागो वेदान्त इति व्युत्पत्तियोगान्मुख्यो वेदान्तशब्दो वेदभागभेदेषु शारीरकादौ तूपचरित इति व्युत्पादितः । ननु किं पुनरस्य ग्रन्थस्यारम्भे निमित्तम् । न खलु निर्निमित्ता प्रेक्षावत्प्रवृत्तिरिति चेत्को भावः । निमित्तमात्राक्षेप इति चेन्न[3] अशनायाद्यनेकोर्मिमालाकुलसमुन्नतक्षोभहतविवेकविज्ञानपाथसि दृढतरकामक्रोधाद्युत्तुङ्गशैलजालविषमे सुतदुहितृकलत्रबान्धवाद्यनेकमकरनक्रचक्राकुले नरमृगपशुपक्षिदेवादिस्थानभोगफेनबुद्बुदे संसारसागरेऽनवरतमध ऊर्ध्वं तिर्यग्वा मज्जनोन्मज्जनादिविवशानतिविततगम्भीरार्थानेकशास्त्रवेदान्तविचारमहाद्रुमावलम्बनासमर्थान्दुःखिनो लोकानालोक्य सञ्जातकरुणाया निमित्तत्वोपपत्तेः । अथ निमित्तविशेषाक्षेपश्चेत्तत्राह अस्य इति ।

"शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः" ॥[4]

---

१. *Sankshepas'ārīraka* i. 18. २. *Brahmasūtra* 1. 1. 1. ३. See प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते in *Maxims* iii. ४. *Parās'ara-upapurāṇa* xviii. 21, 22 (or, *Kaivalyaratna* p. 45. This was reprinted from *The Paṇḍit* in 1901).

इति हि प्रकरणलक्षणं वदन्ति । तथा च यच्छास्त्रैकदेशसम्बद्धं यत्प्रकरणं तत्तच्छास्त्रीयैरेवानुबन्धैरनुबन्धवद्युक्तम् । अन्यथा शास्त्रप्रकरणयोर्भिन्नवि- षयादिमत्त्वेन शास्त्रासम्बद्धत्वप्रसङ्गादसम्बद्धप्रलपितमिदमापद्येत । अतोऽस्य ग्रन्थस्य वेदान्तशास्त्रीयप्रकरणत्वाद्वेदान्तशास्त्रसिद्धैरेवानुबन्धैस्तद्वत्तासिद्धेः तेऽनुबन्धाः पृथगालोचनीया इत्यर्थः ॥

ननु महाविषयादेरिह शास्त्रीयत्वेऽप्यवान्तरविषयादेः पृथगालोचनमुचि- तमितरथा शास्त्रं परित्यज्य प्रेक्षावतोऽत्र प्रवृत्त्ययोगादितिचेद्बाढं प्रकरणलक्ष- णावान्तरसङ्गतेः सुलभालोचनत्वात्पृथगिह निर्देशानपेक्षणात् । तथा हि सारग्रहणेच्छुरवान्तराधिकारी । सगुणनिर्गुणरूपविषयभेदं परित्यज्य निर्गुण- सारमात्रमिह विषयः । तन्मात्रावधारणमवान्तरप्रयोजनम् । सम्बन्धोऽपि विषयानुरूप इति भावः । ननु शास्त्रीयोऽनुबन्धः शास्त्रविद्भिरेव विज्ञातो न व्युत्पित्सुभिस्तत्कथमिह तेषां शास्त्रीयविषयाद्यनभिज्ञानां प्रवृत्तिरित्या- शङ्क्य शास्त्रीयमेवानुबन्धं संक्षेपतो व्युत्पादयितुमुपक्रमते तत्रानुबन्धो नाम इत्यादिना । तत्र वेदान्तशास्त्रे । स्वार्थप्रतिपत्तारमनाश्रित्य शास्त्रे प्रवृत्त्ययोगादादावधिकार्यनुबन्धापेक्षा । तस्य च विषयबोधमन्तरेणाप्रवृत्तेः विषयस्य तदानन्तर्यम् । विषयस्य च शक्यप्रतिपाद्यत्वसिद्धये सम्बन्धस्य वि- यानन्तर्यम् । प्रयोजनस्य चरमत्वं प्रसिद्धमित्युद्देशपाठक्रमो विवक्षितः । तथा च शारीरकसूत्रं "अथातो ब्रह्मजिज्ञासा" इति ॥ ३ ॥

तत्र यथोद्देशक्रममधिकारिणं निरूपयति **अधिकारी तु** इति । धर्मजि- ज्ञासाधिकारिणोऽस्य वैलक्षण्यसूचनार्थस्तुशब्दः । प्रमाताधिकारीत्यन्वयः । लौकिकवैदिकव्यवहारेष्वभ्रान्तो जीवः । प्रमातेह विवक्षितो जीवमात्रस्य पुंसो भ्रमसम्भवेन शास्त्रार्थप्रतिपत्तृत्वायोगात् । तस्य तुशब्दसूचितं विशेषणमाह **साधनचतुष्टयसम्पन्न** इति । वक्ष्यमाणसाधनचतुष्टयविशिष्ट इत्यर्थः । अयं भावः । न तावद्वेदाध्ययनं ब्रह्मजिज्ञासाधिकारहेतुस्तस्य धर्मब्रह्मजिज्ञा- सयोः साधारणत्वात्तन्मात्रेणेह नियमेन प्रवृत्त्यनुपपत्तेः । नापि धर्मविचारः । प्रागपि धर्मविचारादधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः । नापि धर्मानुष्ठा- नमिह जिज्ञासाहेतुर्विनापि धर्मानुष्ठानं ब्रह्मचर्यादेव विरक्तस्य ब्रह्मजिज्ञा- सादर्शनात् । श्रुतिश्च भवति विविदिषोः सन्न्यासविधायिनी "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इत्यादिका ॥

ननु "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासि" इति श्रुतेः ।

1. *Jabala.* 4. 2. *Tait-samhita* 6. 3. 10. 5.

